| | | |
|---|---|---|
| | रजयते नीक्षयते शीतरूरे तन्वाद् अस्य भीमं । | * नेक्ष्यत स्यीतरूरी तन्वो * * |
| | रूपाण्य् एति बहुधा वसानो प्रहा[न्] कृण्वानस् तन्व[×] पराचे ॥२॥ | ...कण्वानस् * * |
| ऋ १.१६४.१३ पै १६.६७.१ | पंञ्चारे चक्रे परिवर्तमाने तस्मिन्न् आ तस्थुर् भुवनानि विश्वा । | * * परिवर्तमाने तस्मिन्न्... |
| | तस्य नाक्षस् तप्यते भूरिभारस् सनाद् एव न शिर्यते सनाभिः ॥३॥ | * नाक्षस्...सनाद् * नेव् शिर्यते सनाभिः |
| | पञ्चभिस् तपस् तपत्व् एष पतत् सहस्रधामान्य् अधि तिष्ठन्स्य् एनम् । | * तपुत तपुव्... |
| | सप्त त्वा सूर्य हरितो वहन्ति ब्रह्मणादित्य त्रिवृता सवने ॥४॥ | * * * * वहन्ति ब्रह्मणादित्यस् * छसवने |
| | वि द्योतते द्योतत आ द्योतते वाप्स्व् अन्तर् अमृतो घर्म उद्यन् । | * * द्योतता च द्योततेर् अस्त्व् * * घर्म दुद्यन् |
| | हन्ता वृत्रस्य हरिताम् अनीकम् अनाधृष्टास् तन्वस् सूर्यस्य ॥५॥ | ...अनादिष्टा तेनस् * |
| वैतानसूत्रे १४.१ | घर्म× पश्चाद् उत घर्म× पुरस्ताद् अयोदंष्ट्राय द्विषतो ऽपि दध्मः । | ...अयदंष्ट्र्य * * नध्म |
| | वैश्वानरश् च शीतरूरे वसानस् सपत्नान् मे द्विषतो हन्तु सर्वान् ॥६॥ | * * सचाशीतरूरे... |
| | क्रतु[म्] क्रतुभिश् शमयति [ब्रह्मणैकवीरो घर्मेश् शुचानस् समिधा समिद्धः । | * निर्क्तुभिश् * |
| | [ब्रह्म त्वा तपति] ब्रह्मणा तेजसा च ॥७॥ | |
| | ब्रह्म जज्ञानं प्रथमं समारम्भे तज् जायमानं न विभ्ये न तद् विदे । | ...रवज् * * विभे * * * |
| | त[द्] रोहमाणं ¿ वितर्यो ह ततस्य नाक्या तता विततास् ततातता ? ॥८॥ | |
| | अमर्त्यजा नस् स्वराज्यभारो रयिं जजान स्वंजास्तु भर्ता । | अमर्त्योजा * स्वराज्यभार * जजानस् स्वजस्त * |
| वे २५.१२[१.४] | प्रजापति× प्रजाभिस् संविदानस् त्रीणि ज्योतींषि दधते चापाकः ॥९॥ | ...तदाते चपाकः |
| शौ १०.८.१३[१.२] | प्रजापतिश् चरति गर्भे अन्तस् स्वजायमानो बहुधा वि जायते । | * चरसि ... |
| | तस्य पदम् अभि पश्यन्ति वेधसस् तस्मिन्न् आर्पिता भुवनानि विश्वा ॥१०॥ ॥का°२॥ | * * * * वेदसस्... |

१६.१५२

| | | |
|---|---|---|
| शौ १०.८.३४ | यस्मिन् देवा× पितरो मनुष्या[श् चा]रा नाभाव् इव श्रिताः । | * देवान्...स्वतः |
| | अपां त्वा पुष्पं पृच्छामि यत्र तन् मायया हितम् ॥१॥ | अपन्...तं पावा * |
| [१]शौ १०.७.२४[२] । [२]शौ १०.८.२०[४] | यत्रापां पुष्पं निहितं मायाभिर् हितं गुहा न । | यत्रापं * * मायाति हतं * र |
| | यो वै तद् विद्यात् प्रत्यक्षं स विद्याद् ब्राह्मणं महत् ॥२॥ | * * तत्त ... |
| | मणिस् तु सूत्रे निहितस् स्वर्येद् ऊर्ध्व[स्] श्रियं विशातु प्रजानन् । | * * सूत्रो निहतस्... |
| | स पुमान् पुंसो अनयन् ¿ ततेन सर्वाम् अदन्तां अश्नतु सर्वेच ? ॥३॥ | |
| | सर्वां रात्रिं सम् ओषत्व् आदित्यो जातवेदसा । | * रात्रियं सहोषित्वादित्यो * |
| | अग्नेर् अधि दिवम् आरोहम् आयुषा स पुनातु मां वर्चसा सं सृजतु माम् ॥४॥ | ...पुनन्तु मा * * सृजातु |
| | घर्मस् साहसस् समिधा समिद्धो ऽसपत्ना× प्रदिशो मे भवन्तु । | * सहस समिधास् * सपत्न×... |
| | सपत्नान् सर्वान् मे सूर्यो हन्तु वैश्वानरो हरि[:] । | ...सूर्व... |
| वे १४.१ | घर्मस् तप× प्र दहतु भ्रातृव्यान् द्विषतो वृषा ॥५॥ | * तपतु ... वृका |
| | उद्यन् मे शुक्र आदित्यो विमृधो वध्मि सूर्य[:] । | * * शुक्रादित्यो... |
| | वैश्वानर× प्र दहतु भ्रातृव्यान् द्विषतो मम ॥६॥ | |
| | आयन्ताध् ? शत्रून् आदित्य विमृधो हन्मि रक्षसा । | * शतून् ... |
| | शुक्रं सुवर्णं हरिं ब्रह्म भ्राजिष्ठं ज्योतिर् दिवम् आ ततान ॥७॥ | * * * * भ्राजर्न... |
| | हरिस् सुवर्णस् सुजस्व् अभयंकरो हिरण्यवर्णो दुरिता पातु ? । | * * सुजतु मबंकरो... |
| वे १४.१ | सपत्नान् सर्वान् मे सूर्यो हन्तु वैश्वानरो गृहन् ॥८॥ | * * * सूर्व पेतु * गृहम् |
| | महान्तम् अर्थं परिलिप्सन् अहोरात्रे विततश् शुक्र उद्यन् । | मवन्तम् * °सवेस्य् * * शुक उयन् |
| | सपत्नान् सर्वान् मे सूर्यो हन्तु वैश्वानरो गृहन् ॥९॥ | ...सूर्व पतु * चृहम् |
| पै १०.१०.२ | उद्यन्न् अद्य मित्रमह[स् सपत्नान् मे अव अहि । | } उद्यन्न् अद्य मित्रमह इत्य् एका |
| | [दिव एनान् रश्मिभिस् सह रश्मीर्णा तमसा वधीस् ते यन्त्व् अधमं तमः] ॥१०॥ | |
| | तेजस् तपांसि मुञ्चतो विभर्त्य् आनन्दं भूतं महसि प्रतिष्ठाम् । | तेजास् त्वपांसि * विभार्न्द्...प्रतिसिष्ठाम् |
| | पर्यूहमाणश् अप तेषु सर्वतो अमोघं सत्यं यश उद्यतं ते ॥११॥ ॥का°३॥ | |

१६.१५३

| | | |
|---|---|---|
| शौ ११.५.१ | ब्रह्मचारीष्णंश् चरति रोदसी उभे अस्मिन् देवास् सुमनसो भवन्तु । | ब्रह्मचारीष्णोष् * * * वस्मिन्मिन्... |

| | | |
|---|---|---|
| | स दाधार पृथिवीं द्याम् उतामूं स आचार्यं तपसा बिभर्ति ॥१॥ | सम • • • • साचार्य उपसा • |
| शौ ३ | आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भम् अन्तः । | • उपनेमानो... |
| | तं रात्रीस् तिस्र उदरे बिभर्ति तं जातं द्रष्टुम् अभिसंयन्तु देवाः ॥२॥ | त्वं • • • • त्वं • मिष्ठुन् अभीसीयन्तु देवः |
| शौ २ | ब्रह्मचारिणं पितरो मनुष्या देवजना गन्धर्वा अनुसंयन्तु सर्वे । | ...देवाजना गन्धर्वानुसम्यन्तु • |
| | त्रयस्त्रिंशत् त्रिशताष् षट्सहस्रास् सर्वान् स देवांस् तपसा बिभर्ति ॥३॥ | त्रयस्त्रिंशतं त्रिशतं • सहस्रान्... |
| शौ ४ | [इ]यं समित् पृथिवी द्यौ[र्] द्वितीयोतान्तरिक्षं समिधा पृणाति । | ...समिता पृणासि |
| | ब्रह्मचारी समिधा मेखलया श्रमेण लोकांस् तपसा बिभर्ति ॥४॥ | ...। श्री श्रमेण लोकांस् तपसा बिभर्ति |
| शौ ५ | पूर्वो जातो ब्रह्मणो ब्रह्मचारी घर्मं वसानस् तपसोद् अतिष्ठत् । | श्री पूर्वो...तपसोधि तिष्ठत् |
| | तस्माज् जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश् च सर्वे अमृतेन साकम् ॥५॥ | |
| शौ ६ | ब्रह्मचार्य [एति] समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः । | ब्रह्मचारी...कार्ष्णि • • • |
| | स सद्य एति पूर्वाद् अपरं समुद्रं लोकान् संसृत्य मुहुर् आचरिक्रत् ॥६॥ | • सधेत् पूर्वाद् • • लोकां संसत्वसि हरा |
| शौ ७ | ब्रह्मचारी जनयन् ब्रह्मापो लोकं प्रजापतिं परमेष्ठिनं विराजम् । | ...लोकां प्रजापती • निराजद [अरिक्रत् |
| | गर्भो भूत्वामृतस्य योनाव् इन्द्रो भूत्वासुरांस् ततर्ह ॥७॥ | • • योनाम् • भूत्वामृतांस् तर्ह |
| शौ ९ | इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षाम् [आ] जभार प्रथमो दिवं च । | ... चभार प्रशमो • • |
| | ते ब्रह्म कृत्वा समिधाव् उपास्ते तयोर् आर्पिता भुवनानि विश्वा ॥८॥ | त • • समिधासमिधा उपासत ततयोर् अर्पिता • • |
| शौ ८ | आचार्यस् ततक्ष नभसी उभे [इमे] उर्वी गभीरे पृथिवीं दिवं च । | • ततक्ष... |
| | ते ब्रह्मचारी तपसाभि रक्षतु तयोर् देवास् सदमादं मदन्ति ॥९॥ | तो... |
| शौ १० | अर्वाग् अन्य× परो अन्यो गुहा [निधी] निहितौ ब्राह्मणस्य । | • • परान्यो • निहतो ब्रह्मणस्य |
| | तौ ब्रह्मचारी तपसाभि रक्षतु तत् केवलं कृणुते ब्रह्म विद्वान् ॥१०॥ | ...विधाम् |
| | ॥का॰४॥ | |

१६.१५४

| | | |
|---|---|---|
| शौ ११.५.११ | अर्वाग् अन्यो दिवस् पृष्ठाद् इतो ऽन्य× पृथिव्या [अ]ग्नी समेतो नभसी अन्तरेमे । | ...समवतो • |
| | तयो[श्] श्रयन्ते रश्मयो ऽधि दृढास् तान् आ तिष्ठतु तपसा ब्रह्मचारी ॥१॥ | • श्रयन्ते • अति • स्तान् .. |
| शौ १२ | अभिक्रन्दन् अरुणश् शितिङ्गो बृहच् छेपो अनु भूमौ जभार । | • इरुणश् शतिंगो • • न भोनो • |
| | ब्रह्मचारी सिञ्चतु सानौ रेत× पृथिव्यां तेन जीवन्ति प्रदिशश् चतस्रः ॥२॥ | • • सानो... |
| शौ १४ | पर्जन्यो मृत्युर् वरुणस् सोम ओषधय× पयः । | |
| | जीमूता [आ]सन् सत्वानस् तैर् इदं स्वर् आभरम् ॥३॥ | • सं • • भरां • • |
| शौ १३ | अग्नौ सूर्ये चन्द्रमसि मातरिश्वन् ब्रह्मचार्य अप्सु समिधम् आ दधाति । | अग्नौ...दधासि |
| | तेषाम् अर्चींषि पृथग् अभ्रे अन्तस् तेषाम् आज्यं पुरुषो वर्षम् आप[ः] ॥४॥ | • अर्चींषि प्रति गर्भान् उन्तस् • • • वर्षम् • |
| शौ १५ | अमा घृतं कृणुते केवलम् आचार्यो भूत्वा वरुणो [य]द्यद् ऐच्छत् प्रजापती । | आमा दिवं...वरुणो • ऐरस |
| | स ब्रह्मचारी [प्रायच्छत् स्वाम् मित्रो अध्य् आत्मनः ॥५॥ | |
| शौ १६ | [आचार्यो ब्रह्मचारी] ब्रह्मचारी प्रजापतिः । | |
| | प्रजापतिर् वि राजति विराड् इन्द्रो ऽभवद् वशी ॥६॥ | • • • विराड् • भरद् • |
| शौ १७ | ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति । | ...रक्षति |
| | आचार्यो ब्रह्मचर्येण ब्रह्मचारिणम् इच्छते ॥७॥ | ...इच्छति |
| शौ १८ | ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् । | ...विन्दते • |
| | अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति ॥८॥ | अनड्वाहं ब्रह्मचर्येणाश्वे • जहिषति |
| शौ १९ | ब्रह्मचर्येण तपसा देवा मृत्युम् उपाजयन् । | ...उपाजयम् |
| | इन्द्रो ह ब्रह्मचर्येणामृतं स्वर् आभरत् ॥९॥ | |
| शौ २० | ओषधयो भूतभव्यम् अहोरात्रे वनस्पतयः । | • भूताभव्यम्... |
| | संवत्सरस् सह ऋतुभिस् ते जाता ब्रह्मचारिणः ॥१०॥ ॥का॰५॥ | संवत्सरस्य ह ऋतुभिस् • • ब्रह्मचारिणा |

१६.१५५

| | | |
|---|---|---|
| शौ ११.५.२१ | पार्थिवा दिव्या× पशव आरण्या ग्राम्याश् च ये । | |
| | अपक्षा[×] पक्षिणश् च ये ते जाता ब्रह्मचारिणः ॥१॥ | ...॰चारिणा |

| | | |
|---|---|---|
| शौ ११ | पृथक् सर्वे प्राजापत्या[×] प्राणां आत्मसु बिभ्रति । | ...आत्मसि बिभ्रती |
| • | सर्वांस् तान् ब्रह्म रक्षति ब्रह्मचारिण्य् आभृतम् ॥२॥ | सर्वांस् त्वां ... आंभ्रतं |
| शौ २४[१.१] | ब्रह्मचारी ब्रह्म भ्राजद् बिभर्त्य् अस्मिन् देवा अधि विश्वे समोताः । | ...समेता |
| शौ २६[१.४] | स जातो बभ्रु× पिङ्गल× पृथिव्यां बहु रोचते ॥३॥ | |
| गो ब्रा १.२.७ शौ २३[१.२] | देवानाम् एतत् पुरुहूतम् अनभ्यारूढं चरति रोचमानम् । | ...मनुष्यारूढं * * |
| | तस्मिन् सर्वे पशवस् तत्र यज्ञास् तस्मिन्न् अन्नं सह देवताभिः ॥४॥ | ...अन्नं * * |
| शौ २४[३.४],२५ | प्राणापानौ जनयन्न् आद् व्यानं चक्षुश् श्रोत्रं जनयन् ब्रह्म मेधाम् । | * * वा ... |
| | वाचं श्रेष्ठां यशो ऽस्मासु धेहय् अथो रेतो लोहितम् उदरम् ॥५॥ | ...अथो * * * |
| शौ २६[१.२] | तानि कल्पद् ब्रह्मचारी सलिलस्य पृष्ठे तपो ऽतिष्ठत् तप्यमानस् समुद्रे ॥६॥ ॥का°६॥ ॥अनु°२२॥ | * कल्पम् ...॥ ॥ ओं तपो तिष्ठत तप्यमानस्समुद्रे ॥ ॥ प्रतिकाण्डे पक्षे पत्रं द्वितीयं द्वितीयं लिखेत् २ ॥ न तु पूर्वं लिखित्वा ॥ अवश्यं अपेत् ॥ ॥ |
| | ॥ इत्यथर्ववेदे पैप्पलादशाखायां षोडश× काण्डस् समाप्तः ॥ | इत्यथर्वणिके पैप्पलादयस् शाखायां षोडश- [काण्डस् समाप्तः ॥ ॥ |

## १७.१

| | | |
|---|---|---|
| शौ १२.१.१ | सत्यं बृहद् ऋतम् उग्रं दीक्षा तपो ब्रह्म यज्ञ[×] पृथिवीं धारयन्ति । | ओं अथ सप्तदशो काण्डः लिख्यते ॥ ॥ ओं नमो गणेशाय । ओं नमो ब्याकाभगवत्यै । ओं नमस्तिकोत्तमायै ॥ ओं सत्यं ... |
| | सा नो भूतस्य भव्यस्य पत्न्य् [उरुं] लोकं पृथिवी न× कृणोतु ॥१॥ | * * भूतस्य कव्यस्य पति... |
| शौ २ | असंबाधं बध्यतो मानवेषु यस्या उद्वत× प्रवतस् समं बहु । | ...अस्या * * सं बभूव् |
| | नानावीर्या ओषधीर् या बिभर्ति पृथिवी न× प्रथतां राध्यतां न: ॥२॥ | ...राध्यता। कास |
| शौ ३[१] | यस्यां समुद्र उत सिन्धुर् आपो यस्यां देवा [अ]मृतम् अन्वविन्दन् । | |
| शौ ४[३.४] | या बिभर्ति बहुधा प्राणद् एजत् सा नो भूमिर् गोष्व् अश्वेषु पिन्वे ? कृणोतु ॥३॥ | ...प्राणिन् एजद्द नो * * * * |
| शौ ५[१.२] | यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरान् अभ्यवर्तयन् । | * * * नि° यस्तां ... |
| शौ ३[३.४] | यस्याम् इदं जीवति ? विश्वम् एजत् सा नो भूमि× पूर्वपेये दधातु ॥४॥ | ...पेजद् ... पूर्वपैय्ये * |
| शौ ४[१.२] | यस्यां चतस्र× प्रदिश× पृथिव्यां यस्याम् अन्नं कृष्टयस् संबभूवुः । | ...गृष्टयस् * |
| शौ ५[३.४] | गवाम् अश्वानां वयसश् च विष्ठा भगं वर्च× पृथिवी नो दधातु ॥५॥ | * * ववमस्य विठा... |
| शौ ६ | विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी । | * वसुअनी ... |
| | वैश्वानरं बिभ्रती भूमिर् अग्निम् इन्द्रऋषभा द्रविणे नो दधातु ॥६॥ | * * * अग्निर् मिर्द° ... |
| शौ ९ | यस्याम् आप× परिचरास् समानीर् अहोरात्रे अ[प्र]मादं क्षरन्ति । | यस्याम् * °चराद * °रात्रं ... |
| | सा नो भूमिर् भूरिधारा पयो दुहाम् अथो उक्षतु वर्चसा ॥७॥ | * * * °धाना * * अथो अक्षतु * |
| शौ ७° | यां रक्षन्त्य् [अ]स्वप्ना विश्वदानीं देवा भूमिं पृथिवीम् अप्रमादम् । | * रक्षन्तु स्वपुना ... अप्रमानम् |
| | सा नो मधु प्रियं दुहाम् अथो उक्षतु वर्चसा ॥८॥ | ...अक्षतु * |
| शौ ८ | यार्णवे अधि सलिलम् अग्र आसीद् यां मायाभिर् अन्वचरन् मनीषिणः । | ...उग्र * यान् मायामभिर् अन्वजरन् * |
| | यस्या हृदयं परमे व्योमन् सत्येनावृतम् [अ]मृतं पृथिव्या[ः] । | ....सत्येनावृतु * * |
| | सा नो भूमिस् त्विषिं बलं राष्ट्रे दधातूत्तमे ॥९॥ | * नो नो भूमि त्वस्त्विषि बलि * * |
| शौ १०[१.२] | याम् अश्विनाव् अमिमातां विष्णुर् यस्यां विचक्रमे ॥१०॥ ॥का°१॥ | * अश्विनाम् इममातां ... |

## १७.२

| | | |
|---|---|---|
| शौ १२.१.१०[३]–१९ | इन्द्रो यां चक्र आत्मने ऽनमित्रां शचीपतिः । | * * चक्रात्मने नमित्रांद् * |
| | सा नो भूमिर् वि सृजतां माता पुत्राय न× पयः ॥१॥ | |
| | गिरयस् ते पर्वता हिमवन्तो अरण्यं ते पृथिवि स्योनम् अस्तु । | गिरिस ... अस्तुनः |

| | | |
|---|---|---|
| | वभ्रुं कृष्णां लोहिनीं विश्वरूपां ध्रुवां भूमिं पृथिवीम् इन्द्रगुप्ताम् । | |
| | अजीतो अहतो अक्षतो अध्य् अष्ठां पृथिवीम् अहम् ॥२॥ | अजीहतो हतो * अधि ष्ठा * * |
| | यत् ते मध्यं पृथिवि यच् च नभ्यं यास् त ऊर्जस् तन्वस् संबभूवुः । | * * * पृथिवी * * नाभा यांश तद् * * * |
| | तासु नो धेह्य् अभि न× पवस्व माता भूमि× पुत्रो ऽहं पृथिव्याः । | तासि ... पवस्वा ... |
| | पर्जन्य× पिता स उ न× पिपर्तु ॥३॥ | * * सो * पिपर्तुः |
| | यस्यां वेदिं परिगृह्णन्तु भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः । | |
| | यस्यां मीयन्ते स्वरव× पृथिव्याम् ऊर्ध्वाश् शुक्रा आहुत्या× पुरस्तात् । | ...शुक्रा हुत्या * |
| | सा नो भूमिर् वर्धयातु वर्धमाना ॥४॥ | * * भूमि वर्धयातु वर्धयातु वर्धमानाम् |
| | यो नो द्वेषत् पृथिवि य× पृतन्याद् यो ऽभिमन्याते मनसा वधेन । | * * * पृथिवी यत्... वधेन |
| | तं नो भूमे रन्धय पूर्वकृत्वरि ॥५॥ | तम् * भूवं * °कृत्वने |
| | त्वज् जातास् त्वयि चरन्तु मर्त्यास् त्वं बिभर्षि द्विपदश् चतुष्पदः । | त्वं * रवी अरन्तु ... |
| | तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिर् अमृतं मर्त्येभ्य उद्यन् सूर्यो रश्मिभिर् आतनोति ॥६॥ | तवमे पृथिवी ... |
| | ता न× प्रजास् सं दुह्रतां समग्रा वाचो मधु पृथिवि धेहि मह्यम् ॥७॥ | * * प्रजात् सिग भूरतां * * मधु * * महीयम् |
| | विश्वस्वं मातरम् ओषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम् । | विश्वस्सं ... |
| | शिवां स्योनाम् अनु चरेम विश्वहा ॥८॥ | |
| | महत् सधस्थं महती बभूविथ महान् वेग एजथुर् वेपथुष् टे । | * सधस्तं * बभूवथ * देवेभुर् गोपतिहे |
| | महांस् त्वेन्द्रो रक्षतु वीर्येण । | महस् तेन्द्रो * * |
| | सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि ॥९॥ | |
| | [अग्निर् भूम्याम् ओषधीष्व् अग्निम् आपो बिभ्रत्य् अग्निर् अश्मसु । ] | |
| | अग्निर् अन्त× पुरुषेषु गोष्व् अश्वे[ष्व् अ]ग्नयः ॥१०॥ ॥का°२॥ | |
| शौ १२.१.२०–३०,४४ | **१७.३** | |
| | अग्निर् दिव आ तपत्य् अग्नेर् देवस्योर्व् अन्तरिक्षम् । | * दिवा तपत्य्... |
| | अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥१॥ | |
| | अग्निवासा× पृथिव्य् असितज्ञुस् त्विषीवन्तं संशितं मा कृणोतु ॥२॥ | अग्निवासः * असतज्ञु * संसितु * * |
| | भूम्यां देवेभ्यो जुह्वति यज्ञं हव्यम् अरंकृतम् । | ...यज्ञो ... |
| | भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्याः । | ...स्वधयान्नतु मर्त्या |
| | सा नो भूमि× प्राणम् आयुर् दधातु जरदष्टिं मा पृथिवी कृणोतु ॥३॥ | |
| | यस् ते गन्ध× पृथिवि संबभूव यं बिभ्रत्य् ओषधयो यम् आपः । | ...यप् आपः |
| | यं गन्धर्वा अप्सरसश् च भेजिरे यस् त गाम् अश्वम् अर्हति । | |
| | तेनास्मान् सुरभीन् कृणु मा नो द्विक्षत कश् चन ॥४॥ | तेनास्मान् सुरभीः ... द्विक्षतु ... |
| | यस् ते गन्ध× पुष्करम् आविवेश यं संजभ्रुस् सूर्याया विवाहे । | ... संचभ्रस् * * |
| | अमर्त्या× पृथिवि गन्धम् अग्रे तेनास्मान् सुरभीन् कृणु मा नो द्विक्षत कश् चन ॥५॥ | अमर्त्यः ... सुरभीः ... द्विक्षतु |
| | यस् ते भूमे पुरुषेषु स्त्रीषु पुंसु भगो रुचिः । | * * भौमे * * पुंसु * कन्युर् |
| | यो वधूषु यो गोष्व् अश्वेषु यो मृगेषूत हस्तिषु । | |
| | कन्यायां वर्चो यद् भूमे तेनास्मां अभि सं सृज मा नो द्विक्षत कश् चन ॥६॥ | * वर्चा * भौमे तेनास्मा ... द्विक्षतु * |
| | शिला भूमिर् अश्मा पांसुर् या भूमि[स्] संधृता धृता । | * * अश्मा पांसर् * * स्धृता * |
| | [ तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः ] ॥७॥ | |
| | यस्यां वृक्षा वानस्पत्या ध्रुवास् तिष्ठन्तु विश्वहा । | |
| | भूमिं हिरण्यवक्षसं धृताम् अच्छावदामसि ॥८॥ | भूम्यो °वक्षसि ... |
| | उदीराणा उतासीनास् तिष्ठन्त× प्रक्रामन्तः । | ... तिष्ठन्तु प्रकामतः |
| | पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ॥९॥ | * °सव्याभ्यस् * व्यतिष्मै * |
| | विमृग्वरीं पृथिवीम् आ वदामि क्षमां भूमिं ब्रह्मणा वावृधानः । | विमर्षव ... |
| | ऊर्जं पुष्टिं बिभ्रतीम् अन्नभागं घृतं त्वाभि नि षीदामि भूमे ॥१०॥ | * * * अन्नमागं * * नु * भौमे |
| शौ कोशेषु नाना स्वेदुः, स्वेदुः, सेदुः | शुद्धा न आपस् तन्वे क्षरन्ति यो मे सेदुर् ? अप्रिये तं नि [द]ध्मः । | * मापस् तन्व रक्षन्ति * * सेदार् * * वभि * |
| | पवित्रेण पृथिवि मोत् पुनामि ॥११॥ | * पृथिवी मुत् * |

| | | |
|---|---|---|
| | निधिं बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु नः । | निधिं ... मणिनो * * दधातु * |
| | वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना ॥१२॥ ॥का°३॥ | ... सुमनस्यमाना: |

## १७.४

| | | |
|---|---|---|
| शौ १२.१.३१ | यास् ते प्राचीर्[×] प्रदिशो या उदीचीर् यास् ते भूमे अधराद् याश् च पश्चात् । | ...भौमे दधराद् * * |
| | स्योनास् ता मह्यं चरते भवन्तु मा नि पप्तं भुवने शिश्रियाणः ॥१॥ | * त्वा * तरते * * न पप्ति * शुश्रियाणे |
| शौ ३२ | मा मा पश्चान् मा पुरस्तान् नुदिष्ठा [मोत्तराद् अधराद् उत] । | मा * * पुरस्ताद् अधिष्ठा |
| | स्वस्ति भूमे मे कृणु वरीयो यावया वधं मा विदन् परिपन्थिनः ॥२॥ | * भौमे * * वायो ... विधं * |
| शौ ३३ | यावत् ते [अ]भि विपश्यामि भूमे सूर्येण मेदिना । | * * * वपश्यामि भौमे ... |
| | तावन् मे चक्षुर् मा मेष्टोत्तरामुत्तरां समाम् ॥३॥ | * * चक्षुषुत्तरामुत्तरां * |
| शौ ३५ | यत् ते भूमे विखनाम्य् ओषं तद् अपि रोहतु । | * * भौमे विखनां योषं तत् पु * |
| | मा ते मर्म विमृग्वरि मा ते हृदयम् अर्पिपम् ॥४॥ | * * मम्म विमर्ग्वरि ... |
| शौ ३४ | यच् छयानः पर्यावर्ते दक्षिणं सव्यम् अपि भूमे पार्श्वम् । | ...भौमे * |
| | उत्तानास् त्वा प्रतीचीं पृष्ट्या यद् अधिशेमहे । | उत्तानस् * * पृष्ट्वा ऽधशेमहे |
| | मा हिंसीस् तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥५॥ | ...भौमे * * |
| शौ ३६ | ग्रीष्मस् ते भूमे वर्षाणि शरद् धेमन्तश् शिशिरो वसन्तः । | * * भौमे ... |
| | ऋतवस् ते विहिता हायना [अ]होरात्रे पृथिवि नो दुहाताम् ॥६॥ | * * वीत ... |
| शौ ३७ विजमाना* | याप सर्पं यतमाना ? विमृग्वरी यस्याम् आसन्न् अग्नयो ऽप्स्व् अन्तः । | यमापस् सर्पन् * विमर्ग्वरि यास्वाम्... |
| | परा दस्यून् ददती देवपीयून् इन्द्रं वृणाना पृथिवी न वृत्रम् । | * * दधती °पीयूंन् .. |
| | शक्राय दध्रे वृषभाय वृष्णे ॥७॥ | |
| शौ ४० | सा नो भूमि[र्] आ दिशतु यद् धनं कामयामहे । | |
| | भगो अनुप्रयुङ्क्ताम् इन्द्रो यातु पुरोगवः ॥८॥ | * नपुयुक्ताम्... |
| शौ ३८[१-४] | { ब्रह्माणो यस्याम् अर्चन्त्य् ऋग्भिस् साम्ना यजुर्विदः । | |
| | युज्यन्ते [य]स्याम् ऋत्विजस् सोमम् इन्द्राय पातवे । } | * * ऋत्वजस्... |
| | सा नो भूमि[र्] दक्षिणायां सुशेवा यज्ञं दधातु सुमनस्यमाना ॥९॥ | ... सुश्वा ... |
| शौ ३९ | { यस्यां पूर्वे भूतकृत ऋषयो गा उद् आनृचुः । | ...आनात् |
| | सप्त सत्रेण वेधसो यज्ञेन पयसा सह । } | * * वेदसो ... |
| | सा नः पशून् विश्वरूपान् दधातु जरदष्टिं मा पृथिवी कृणोतु ॥१०॥ | |
| शौ ४२ | यस्याम् अन्नं व्रीहियवौ यत्रेमा× पञ्च कृष्टयः । | * * व्रीहयवो...कृष्टयः |
| | भूम्यै पर्जन्यपत्न्यै नमो ऽस्तु वर्षमेदसे ॥११॥ ॥का°४॥ | भूमी °पत्नी * * °मेधसे |

## १७.५

| | | |
|---|---|---|
| शौ १२.१.४१ | यस्यां गायन्ति नृत्यन्ति जना मर्त्या व्यैलबाः । | ...ऐलब। |
| | युध्यन्ते [य]स्याम् आक्रन्दो यस्यां वदतु दुन्दुभिः । | युध्यन्ते... |
| | सा नो भूमि× प्र णुदताम् सपत्नान् यो नो द्वेषद् अधरं तं कृणोतु ॥१॥ | * * * * दधतां सपत्नाँ * * दुष्टस्... |
| शौ ४३ | यस्यां पुरो देवकृता× क्षेत्रे यस्यां विकुर्वते । | |
| | प्रजापति× पृथिवीं विश्वगर्भाम् आशामाशां रण्यां न× कृणोतु ॥२॥ | * * * आशामासा रण्याम् निहणोतु |
| शौ ४५ | जनं बिभ्रती बहुधा [विवा]चसं नानाधर्माणं पृथिवी यथौकसम् । | जनेयं ... यतौकसम् |
| | सहस्रं धारा द्रविणस्य नो दुहां ध्रुवेव धेनुर् अनपस्फुरन्ती ॥३॥ | सहस्रम् * * * * दुहेव ... |
| शौ ४६ | यस् ते सर्पो वृश्चिकस् तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये । | ...वृश्चिकस् * °जब्धो भ्रमलो * शे |
| | क्रिमिर् जिन्वत् पृथिवि प्रावृषि यद् एजति तन् नस् सर्पन् मोप सृपद् यच् छिवं तेन नो मृड ॥४॥ | कृमिन् किंसं पृथिव्ये प्रावर्षी * * तं * सर्पं * सुपत् छवछेनम् * * |
| शौ ४७ | ये ते पन्थानो बहुधा जनायना रथस्य वर्त्मानसश् च यातवे । | ...जनायना * वर्त्मानसश् * * |
| | येभिश् चरन्त्य् उभये भद्रपापास् तं पन्थानं जयेमानमित्रम् अतस्करं [यच् छिवं तेन नो मृड] ॥५॥ | * चरन्त् * °पापस... अतस्करम् |
| शौ ४८ | सर्पं बिभ्रती सुरभिर् भद्रपापस्य निधनं तितिक्षुः । | * * * भद्र पापाश्च * तविष्ठु |

| | | |
|---|---|---|
| | सूकरेण पृथिवी संविदाना वराहाय वि जिहीते मृगाय ॥६॥ | * पृथिवि संविधाना * * जीयत * |
| शौ ४९ | ये त आरण्या× पशवो मृगा वने हितास् सिंहा व्याघ्रा× पुरुषादश् चरन्ति । | व तारण्याः ... पुरुषादुश् |
| | उलं वृकं पृथिवि दुच्छुनाम् इत ऋक्षीकां रक्षो ऽप बाधयास्मत् ॥७॥ | * * पृथिवी * एत रक्षीकां * * बाधामत् |
| शौ ५० | ये गन्धर्वा [अ]प्सरसो ये चारायाः किमीदिनः । | |
| | पिशाचान् सर्वा रक्षांसि तान् अस्मद् भूमे यावय ॥८॥ | पिशाचन् ... अस्मन् भौमे यावयः |
| शौ ५१ | यां द्विपद× पक्षिणस् संपतन्ति हंसास् सुपर्णाश् शकुना वयांसि । | * * * संपरन्ति ... |
| | यस्यां वात [ई]यते मातरिश्वा रजांसि कृण्वंश् च्यावयंश् च वृक्षा[न्] । | ... रवीसि कृण्वाश् चावयांश् * * |
| | वातस्य प्रवाम् [उपवाम्] अनु वात्य् अर्चिः ॥९॥ | ... अर्चिये |
| शौ ५२ | यस्यां कृष्णम् अरुणं च संभृते [अ]होरात्रे विहिते भूम्याम् अधि । | * गृहमगृहम् अरुणं * * * विहते * * |
| | वर्षेण भूमि× पृथिवी वृतावृता सा नो दधातु भद्रया प्रि[ये] धाम्नि-धाम्नि ॥१०॥ ॥का॰५॥ | * * * वृतावृधा स ... |
| | | * ॥१०॥ फइच ५ ॥ |

१७.६

| | | |
|---|---|---|
| शौ १२.१.५३ | द्यौश् च म इदं पृथिवी चान्तरिक्षं च मे व्यचः । | * * मेदं ... |
| | अग्निस् सूर्य आपो मेधां विश्वे देवाश् च सं ददुः ॥१॥ | * सूर्याये मेधां ... दधी |
| शौ ५४ | अहम् अस्मि सहमान उत्तरो नाम भूम्याम् । | * * सहमानाम् ... |
| | अभीषाड् अस्मि विश्वाषाड् आशामाशां विषासहि[:] ॥२॥ | अभीषद् उस्मि विश्वषान् आशामासां * |
| शौ ५५ | यद् अदो देवि प्रथमाना पुरस्ताद् देवैस् सृष्टा व्यसर्पो महित्वम् । | × × दो * * * देवी * विसर्पो * |
| | आ त्वा सुभूतम् अविशत् तदानीम् अकल्पयथा[×] प्रदिशश् चतस्रः ॥३॥ | * वाम् अभूतम् अविस त्वदानी * * * |
| शौ ५६ | ये ग्रामा यान्य् अरण्यानि यास् सभा अधि भूम्याम् । | * ग्राम्या * * यात् समाद् * |
| | तेष्व् अहं देवि पृथिवि स्यासं ? मधुमद् वचः ॥४॥ | * * * पृथ्विवि * मधुमत्वच |
| शौ ५८ | यद् वदामि मधुमत् तद् वदामि [य]द् ईक्षे तद् वनन्तु माम् । | ... वदन्तु * |
| | त्विषीमान् अस्मि जूतिमान् अवान्यान् हन्मि दोधत[:] ॥५॥ | * * ऊमतिमान् अवान्यानि * * |
| शौ ५७ | अश्व इव रजो दुधुवे तान् जनान् आक्षियन् पृथिवीं याद् अजायत । | अश्वीव रदो दवुवि तं जनिमा क्षियां पृथ्विम् |
| | मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभिर् ओषधीनाम् ॥६॥ | मन्द्रापरि भुवनस्य ... [आद् * |
| शौ ५९ | शन्तिवा सुरभि[स्] स्योना कीलालोध्नी पयस्वती । | सन्तिवा * * कीलालोमही * |
| | भूमिर् नो ऽधि ब्रवीतु पृथिवी पयसा सह ॥७॥ | |
| शौ ६३ | भूमे मातर् नि धेहि मा भद्रया सुप्रतिष्ठितम् । | भूमि ... |
| | संविदाना दिवा त्वं श्रियां मा धेहि भूत्याम् ॥८॥ | ... रमा * * |
| शौ ६० | याम् अन्वैच्छद् धविषा विश्वकर्मा यस्याम् आसन्न् अग्नयो ऽन्व् अन्तः । | * अवैश्छद् ... |
| | भुजिष्यं पात्रं निहितं गुहा यद् आविर् भोगे अभवन् मातृमद्भ्यः ॥९॥ | * पात्र * * धेर् * भोर् अभवद् मातमद्भिः |
| शौ ६१ | त्वम् अस्य् आवपनी जनानाम् अदिति× कामदुघा विश्वरूपा । | विमदधावपनी * * कामधुगा * |
| | यत् त ऊनं तत् त आ पूरयाति प्रजापति× प्रजाभिस् संविदानः ॥१०॥ | * तोनंनतत्ता * * * संविदानाम् ॥१०॥ |
| | ॥का॰६॥ ॥अनु॰१॥ | [फइच का ६॥ |
| | | इत्यथर्वणिके सप्तादश काण्डे प्रथमो नुवाकः ॥ |

१७.७

| | | |
|---|---|---|
| शौ १०.७.१ | कस्मिन्न् अङ्गे तपो ऽस्याधि तिष्ठति कस्मिन्न् अङ्ग ऋतम् अस्याध्य् आहितम् । | .. तिष्ठत ... |
| | क व्रतं क श्रद्धास्य तिष्ठति कस्मिन्न् अङ्गे सत्यम् अस्य प्रतिष्ठितम् ॥१॥ | * * कश् * तिष्ठत ... |
| | क ब्रह्म क तिष्ठन्त्य् आप× कस्मिन्न् अङ्गे दिशो ऽस्य प्रतिष्ठिताः । | ... प्रतिष्ठताः |
| | कतमद् अङ्गम् अनु संचरेते अहोरात्रे संविदाने समानम् ॥२॥ | |
| शौ ३ | कस्मिन्न् अङ्गे तिष्ठति भूमिर् अस्य कस्मिन्न् अङ्गे तिष्ठत्य् अन्तरिक्षम् । | तस्मिन्न् ... |
| | कस्मिन्न् अङ्गे तिष्ठत्य् आहिता द्यौ× कस्मिन्न् अङ्गे तिष्ठत्य् उत्तरं दिवः ॥३॥ | तस्मिन्न् ... |
| शौ २ | कस्माद् अङ्गाद् दीप्यते अग्निर् अस्य कस्माद् अङ्गात् पवते मातरिश्वा । | |
| | कस्माद् अङ्गाद् वि मिमीते ऽधि चन्द्रमा[स्] स्कम्भस्य महद् विमिमानो अङ्गम् ॥४॥ | * * द ... दिमिमानो अङ्गे |
| शौ ४ | क प्रेप्सन् दीप्यत ऊर्ध्वो ऽग्नि× क प्रेप्सन् पवते मातरिश्वा । | * प्रीप्सं दीप्तेर्ध्वो ग्नि * प्रेप्सं * * |

| | | |
|---|---|---|
| | यत्र प्रेप्सन्तीर् अभियन्त्य् आवृत[स्] स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥५॥ | * प्रीप्सन्तीर्... |
| शौ ६ | क्व प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवतस् संविदाने । | * प्रीप्सन्ती * यवते * द्रवितस् * |
| | यत्र प्रेप्सन्तीर् अभियन्त्य् आपस् स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥६॥ | * प्रीप्सन्तीर्... |
| शौ ५ | क्वार्धमासा× क्व यन्ति मासास् संवत्सरेण सह संविदानाः । | * कव ... सा * |
| | यत्र यन्त्य् ऋतवो यत्रार्तवा[स्] स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥७॥ | |
| शौ ७ | यस्मिन् स्तब्ध्वा प्रजापतिर् लोकान् सर्वान् अधारयत् । | अस्मिन्वो स्कब्धा... |
| | स्कम्भं तं ब्रूहि कतम[स्] स्विद् एव सः ॥८॥ | ... स्वद् * * |
| शौ ८ | यत् परमम् अवमं यच् च मध्यमं प्रजापतिस् ससृजे विश्वरूपम् । | ... मध्यं ... |
| | कियता स्कम्भ[×] प्र विवेश तत्र यन् न प्राविशत् कियत् तद् [ब]भूव ॥९॥ | कीतास् * * * * यन् च * कुतद् बद् * |
| शौ ९ | कियता स्कम्भ[×] प्र विवेश भूतं कियद् भविष्यद् अन्व् आशये ऽस्य । | ... आशे * |
| | एकं यद् अङ्गम् अकृणोत् सहस्रधा कियता स्कम्भ[×] प्र विवेश तत्र ॥१०॥ ॥का॰१॥ | * ॥१०॥ कवइव का १॥ |

१७.८

| | | |
|---|---|---|
| शौ १०.७.१० | यत्र लोकांश् च कोशांश् च[ापो] ब्रह्म [जना विदुः । | |
| | [असच् च यत्र सच् चान्तस् स्कम्भं तं ब्रूहि] कतम[स्] स्विद् एव सः ॥१॥ | * स्वद् * * |
| शौ ११ | यत्र तप× पराक्रम्य व्रतम् धारयत्य् उत्तरम् । | |
| | ऋतं च यत्र श्रद्धा च ब्रह्मापस् समाहिता[स्] स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥२॥ | |
| शौ १२ | यस्मिन् भूमिर् अन्तरिक्षं द्यौर् यस्मिन्न् अध्य् आहिता । | अस्मि ... अस्मिं च् * |
| | यत्राग्निश् चन्द्रमास् सूर्यो वातस् तिष्ठन्त्य् आर्पितास् [स्कम्भं तं ब्रूहि कतमस् स्विद् एव सः] ॥३॥ | |
| शौ १३ | यस्य त्रयस्त्रिंशद् देवा [अ]ङ्गे सर्वे समाहिताः । | |
| | स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥४॥ | |
| शौ १४ | यत्र ऋषयो भूतकृत ऋचस् साम यजुर् मही । | |
| | एकर्षिर् यस्मिन्न् आर्पितस् स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥५॥ | एकऋषिर्वेषिर् * * * |
| शौ १६ | यस्य चतस्र× प्रदिशो नाड्यस् तिष्ठन्तु प्रथमाः । | ... नाड्यास् * प्रथमाः |
| | यज्ञो [य]स्मिन् पराक्रान्तस् [स्कम्भं तं ब्रूहि कतमस् स्विद् एव सः] ॥६॥ | |
| शौ १५ | यत्रामृतं च मृत्युश् च पुरुषश् च समाहिताः । | * * मृत्युर् यम * * * |
| | समुद्रो यस्य नाड्यस् स्कम्भं तं ब्रूहि कतम[स्] स्विद् एव सः ॥७॥ | * यश्च नाड्यास् ... स्वद् * * |
| शौ १७ | ये पुरुषे ब्रह्म विदुस् ते स्कम्भम् अनुसंविदुः । | ... अरसंविदुः |
| | यो वेद परमेष्ठिनं यश् च वेद प्रजापतिम् । | ... प्रजापती |
| | ज्येष्ठं ये ब्राह्मणं विदुस् ते स्क[म्भ]म् अनुसंविदुः ॥८॥ | ... अरसंविदुः |
| शौ १८ | यस्य शिरो वैश्वानरश् चक्षुर् अङ्गिरसो ऽभवन् । | ... मुवम् |
| | अङ्गानि यस्य ऋतवस् स्कम्भं तं ब्रूहि कतम[स्] स्विद् एव सः ॥९॥ | * यस्यार्तव ... स्वद् * * |
| शौ १९ | यस्य ब्रह्म मुखम् आहुर् जिह्वां मधुकशाम् उत । | |
| | विराजं यस्योध आहुस् स्कम्भं [तं ब्रूहि कतमस् स्विद् एव सः] ॥१०॥ ॥का॰२॥ | * यस्योधाहुस * ॥१०॥ क २ ॥ |
| शौ १०.७.२०–२९ | | |

१७.९

| | | |
|---|---|---|
| | यस्माद् ऋचो अपातक्षन् यजुर् यस्माद् अपाकषन् । | ... अपाकषम् |
| | छन्दांसि यस्य लोमानि स्कम्भं तं ब्रूहि कतम[स्] स्विद् एव सः ॥१॥ | छन्दांस ... स्वद् * * |
| | असच्छाखां प्रतिष्ठन्तीं परमम् इव जना विदुः । | |
| | उतो सन् मन्यन्ते ऽवरे यस्य शाखाम् उपासते ॥२॥ | * सं... |
| | यत्रादित्याश् च रुद्राश् च वसवश् च समाहिताः । | |
| | स्कम्भं तं ब्रूहि कतमस् स्विद् एव सः ॥३॥ | ... स्वद् * * |

| | | |
|---|---|---|
| | यस्य त्रयस्त्रिंशद् देवा निधिं रक्षन्तु सर्वदा । | ● ● ● निधीर्व ● ● |
| | निधिं तम् अद्य को वेद यं देवा अभि रक्षथ ॥४॥ | निधन्तु मध्य गा वेदाभि रक्षतः |
| | यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठम् उपासते । | ● ● ब्रह्म विदुर् ● ● ● |
| | यो वै तद् ब्रह्मणो वेद तं वै ब्रह्मविदो विदुः ॥५॥ | |
| | बृहन्तो नाम ते देवा [ये] ऽसतः परि जज्ञिरे । | ... सितस् ● ● |
| | एकं तद् अङ्गं स्कम्भस्यासद् आहुः परो जनाः ॥६॥ | ...पुरो जनः |
| | यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्तयत् । | ● स्कम्भं प्रजनयं ● विवर्तयत |
| | एकं तद् अङ्गं स्कम्भस्य पुराणम् अनुसंविदुः ॥७॥ | ...नरसंविदुः |
| | यस्य त्रयस्त्रिंशद् देवा [अ]ङ्गे गात्राणि भेजिरे । | |
| | तान् वै त्रयस्त्रिंशद् देवान् एके ब्रह्म[विदो] विदुः ॥८॥ | तानि ... |
| | [ हिरण्यगर्भं परमम् अनत्युद्यं जना विदुः । ] | |
| | स्कम्भस् तद् अग्रे प्रासिञ्चद् धिरण्यं लोकम् अन्तरा ॥९॥ | |
| | स्कम्भे लोकास् स्कम्भे तपस् स्कम्भे ऽध्य् ऋतम् आहितम् । | ● लोकस् ... षु वहितम् ● |
| | स्कम्भं त्वा विद्म प्रत्यक्षम् इन्द्रे सर्वं समाहितम् ॥१०॥ ॥का° १॥ | ● ता ... |

१७.१०

| | | |
|---|---|---|
| शौ १०.७.३० | इन्द्रे लोका इन्द्रे तप इन्द्रे ऽध्य् ऋतम् आहितम् । | ... ऋवहितम् ● |
| | इन्द्रं त्वा विद्म प्रत्यक्षं स्कम्भे सर्वं समाहितम् ॥१॥ | |
| शौ ३१ | नाम नाम्ना जोहवीमि पुरा सूर्यात् पुरोषसः । | नाम्म नाम्मा ● पुराद् ... |
| | यद् अजः प्रथमं संबभूव स ह [त]त् स्वराज्यं जगाम यस्मा[न्] | यद् अजः ● ● सा च ... |
| | न परम् अस्तु भूतम् ॥२॥ | ● ... भूतिम् |
| शौ ३२ | यस्य भूमिः प्रमान्तरिक्षम् उतोदरम् । | ● ● प्रमान्तरिक्षम् उतोदरम् |
| | दिवं यश् चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३॥ | |
| शौ ३३ | यस्य सूर्यश् चक्षुश् चन्द्रमाः पुनर्णवः । | ...पुनर्नव |
| | अग्निं [यश्] चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥४॥ | अग्ने चक्रास्यं ... |
| शौ ३४ | यस्य वातः प्राणापानौ चक्षुर् अङ्गिरसो ऽभवन् । | ... श्चक्षुजिर् ● भुवम् |
| | दिवं यश् चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥५॥ | |
| शौ ३६ | य[श् श्र]मात् तपसो जातो लोकान् सर्वान् समानशे । | |
| | सोमं यश् चक्रे केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥६॥ | |
| शौ ३५ | स्कम्भो दाधार पृथिवीं द्याम् उतामूं स्कम्भो दाधारोर्व् अन्तरिक्षम् । | ... दाधारोर्व्व् ● |
| | स्कम्भो दाधार प्रदिशष् षड् उर्वीस् स्कम्भ इदं विश्वं भुवनम् आ | ... स्कम्भेदं ● ● ● |
| | विवेश ॥७॥ | |
| शौ ३७ | [कथं वातो] नेलयति कथं न रमते मनः । | |
| | किम् आपस् सत्यं प्रेप्सन्तीः प्र चक्रमति ? सर्वदा ॥८॥ | ... प्रयप्सन्ती... |
| शौ ३८ | महद् यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे । | .. स्तमसि क्रान्ति ● ● |
| | यस्मिन् श्रयन्ते ये के च देवा वृक्षस्य स्कन्धः परित इव शाखाः॥९॥ | ... स्कम्भ पतितेव शाखा |
| शौ ३९ | यस्मै देवास् सदा बलिं प्रयच्छन्ति मिते ऽमितम् । | नस्मै देवाद् ● ● प्रयप्सन्ती ● मितां |
| | स्कम्भं तं ब्रूहि कतम[स्] स्विद् एव सः ॥१०॥ ॥का° ४॥ | स्कम्भ नं ● ● स्वद् ● ● |

१७.११

| | | |
|---|---|---|
| शौ १०.७.४० | अप तस्य तमो हतं व्यावृत्तस् स पाप्मना । | ● तस्व .. च पाप्माना |
| | सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ ॥१॥ | |
| शौ ४१ | यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद । | ● वेदसं ... वेदः |
| | स वै गुह्यप्रजापतिः ॥२॥ | ● वे ● |
| | ? न प्रजापतिम् अन्य् एति परमेष्ठिनो उतैत तन् नो ब्रूत य[ज्] ज्येष्ठं | |
| | पदो न्ययत् ? ॥३॥ | |
| | अस्ति वै तत् परो भूमेर् अस्ति वै तत् परो दिवः । | ... भीमेर् ... |
| | लोका वै तस्मिन् संप्रोता[स् त]स्मिन् ह्योता प्रजा इमा[:] ॥४॥ | |
| | ॥का° ५॥ ॥अनु° २॥ | |

| | | |
|---|---|---|
| सुदुर्गमम् एतत् सूक्तम् | **१७.१२** | |
| [दुर्णिहितैषिणीम् | | |
| शौ ११.९.१५[३.४] * * रिशां | अन्त×पात्रे रेरिहतीं दुश्रितं निहितैषिणीम् । | * रेरिहति दुश्चेतुम् नहितेषिणी |
| शौ १६[१.२] अहूरे * सर्विकां | दुरण्डे अधिचङ्क्रमां वक्षमुखा वस्तवासिनीम् ॥१॥ | * अचङ्क्रमे ... |
| [सर्ववासिनीम् | सर्वासां भण्वावत् साकं नामधेयानि विद्मसि । | ...नामधेयानि * |
| शौ १.१४.५[३.४] | यानि जातानि दस्युभ्यो नश्यतेतस् सदान्वा[:] ॥२॥ | * * वस्वमि... |
| | कर्णादशा द्रुतामह उलुकीं केशिनीं ककुम् । | |
| | पङ्कुरिमं वार्हिष्यं नाशयामस् सदान्वा[:] ॥३॥ | ...॥ भीं नाशयामस्सदान्वा ॥ |
| | पञ्चुगिर्यां पालजतीम् असौसूक्ता निगारिणी । | भीं पञ्चुगिर्यां ... |
| | आमातास् सर्वा यो ब्रूमो नश्यतेतस् सदान्वा[:] ॥४॥ | |
| | या [आ]ममं अञ्मयन्त नक्तम् इच्छन्त्य् आतुरम् । | ...इच्छन्ति यातुरम् |
| | अधोदनस्य सतस्य सुखहस्ता नि प्र क्षीयन्ते । | ...क्षीयन्ति |
| | तत् सद् उदकम् अनोहितास् ता इतो नाशयामसि ॥५॥ | |
| | अपदन्मीद् वक्षणाना वस्तगन्धास् सदान्वा[:] । | |
| | भण्वांसि न इतो दहामि तीक्ष्णशृङ्ग इव ऋषभः ॥६॥ | ...°शृङ्ग * |
| | सदान्वास् सादान्वेया स्त्रीपुंसान् उभयान् सह । | ...°पुंसा उभयां * |
| | अथो सहस्वाम् सासह विमृधो हन्मि रक्षसः ॥७॥ | ...सामह विमृदो * रक्षसा |
| शौ ११.९.१७[१.२] | चतुर्दंष्ट्रान् कुम्भमुष्कान् दीर्घकेशान् असृङ्मुखान् । | चतुर्दंष्ट्राम्...असृन्मुखाम् |
| | अलाबुगन्धीन् असुरान् दुर्णाम्नो नाशयामसि ॥८॥ | अलबु° अन्सुरान् दुर्णाम्नो * |
| | स्तम्भे जाता धिपालेर् ओदाकां दहन्तीं यंस्वत् । | |
| | दुर्णाम्नीस् सर्वास् सन्तोका नाशयामस् सदान्वा[:] । | दुर्णाम्नीस... |
| | यासां जातानि क्रोशन्ति इरस्कं तज् अले ज्वलद् उप वृक्षेषु मेरते ॥९॥ | * * क्रोषन्ति * तुज... |
| | या वातात्रद् उत्पन्ति ते च त्वा वर्षेण विद्युता । | |
| | शालायाम् अन्तस् सत्वरं दुर्णाम्नीस् सर्वास् सन्तोका नाशयामस् सदान्वा[:] ॥१०॥ ॥का° १॥ | शाकाय सन्तिस् छत्वरं दुर्णाम्नीस * * नाशयनस * |
| सुदुर्गमम् एतत् सूक्तम् | **१७.१३** | |
| | या धान्यात् संभवन्ति क्षेत्रात् पित्र्याद् व् अर्पिताः । | * * * * पितास्वर्पिता |
| | कृताद् अपि प्राश्या नश्यतेतस् सदान्वा[:] ॥१॥ | |
| | या× परुषा× पापगं × × × × कुक्षा विसर्पती । | |
| | ता वज्रेण समर्पयन् तिरो ऽञ्जनश् शचीपते ॥२॥ | * * * तिर * * |
| कौ ११६.७ | उत् तिष्ठत नि[र्] द्रवत न व इहास्तु न्यञ्जनम् । | ...आस्व इन्धिपञ्जनम् |
| | इन्द्रो वस् सर्वासां साकं गर्भान् आण्डानि भेत्स्यति ॥३॥ | ...भद्रछसि |
| | इन्द्र जहि स्थूरशाकं मृणीहि दुश्शिरीव कुहम् । | ...मृणीह ... |
| | रायं शकधूम्यं नाशया[म]स् सदान्वा[:] ॥४॥ | |
| | किमा सुताञ्चजिह्म् अजम् आयुं च निघ्नती[:] । | |
| | विडिडिह्ला× प्रलोहिनीं नाशयामस् सदान्वा[:] ॥५॥ | |
| | यस्यां सुरमं भयत् स्वयुं यभण्वास् सदान्वा[:] । | |
| | त्रिष्ठं कृणुतां दुरं य... तृप्यताम् असुरापवमे हिता ॥६॥ | |
| | यस्या× पीडावमन्य[ते] ऽथो शीर्षक्स्याशय । | |
| | एताश्च कृष्णी नाशयामस् सदान्वा[:] ॥७॥ | |
| | अपा रोगाम् शकधूमाम् कृशाण्डां यान्ति सत्वरम् । | * रोगां °धूमां ... |
| | अथो दुर्हार्दसो गृहं प्र विशन्त्व् अरायाः ॥८॥ | * दुर्हार्दसो * प्रा * अराय्याः |
| | ता[स्] सामिकारमवृका शकावक्षावनंत्रपुदहांशवीका कनिक्रदा । | |
| | सर्वासां भण्डावत् साकं नामधेयानि विद्मसि । | ...विध्मसि |
| | यानि जातानि दस्युभ्यो नश्यतेतस् सदान्वाः ॥९॥ | यदि * वस्वति पश्यतेत सदन्वा |
| | सहस्विनीं प्र हरामि मांशालां विषासहिम् । | सहस्वीरी... °सहीम् |
| | सदान्वाघ्नीम् ओषधीं जैत्रायाच्छावदामसि ॥१०॥ ॥का° १॥ | |

| | | |
|---|---|---|
| सदुर्णाम्न् एतत् सूक्तम् | **१७.१४** | |
| | यच् शङ्खाशो भीमवक्षोरद् अग्ने अंग्वे सदान्वे । | |
| | आर्जि स्विर्षि शुचिम् अग्निम् अराधि किम् इदेसले । | आर्जिम् स्विर्ष्यं ... |
| | धूमम् आभि प्र गाथ् अमिस्तूवामि महोत्वे ॥१॥ | |
| | कङ्क एका× पुत्र एका× किम् उच्च कृपन्त्य अभिश्रिया । | कङ्कैका× प्रियैका× ... अभिश्रया |
| | चरन्ति नक्तं दुर्णाम्नो रायी सृतकीप्यस् ता इतो नाशयामसि ॥२॥ | * * दुबजो ... त चितो * |
| | अपक्रातम् अभिभयाम् आनुत्यन्तीं कुतूहलम् । | |
| | कुशूलियं रसभक्षणीं कलाज् जातात् मिमृक्ष्यस् ता इतो नाशयामसि ॥३॥ | ... चितो * |
| | या दुधिता वपने शुष्क अदन्ति कम्बुवाम् । | |
| | वडवा गर्दभीर् इव नाशयामस् सदान्वाः ॥४॥ | ... सदन्वा |
| | या× पुरुषं वहामानं शून्यम् अग्नौ जिघत्सन्ति । | य× ... जिघत्सन्ति |
| | भण्डान× कुम्भमांसि मुष्टाग्रेण सदान्वास् ता इतो नाशयामसि ॥५॥ | ... चितो * |
| | या विकेशीर् उन्मृत्योरना घोरचक्षवः । | |
| | शीर्षाण्य् आम्यान्य् आसां वितावन्तीर् इवासते । | |
| | सदान्वा ब्रह्मणस् पते पदो भूणान्य् अर्पय ॥६॥ | सदन्वा ... |
| | यासां गन्धो नानारूप× परैतु पुरुषं प्रति । | |
| | ता [अ]ग्निस् सहताम् इतो जातवेदास् सदान्वास् ता इतो नाशयामसि ॥७॥ | ... चितो * |
| | गर्भान् एक× प्रतिमृशन् व्यावर्ति सदान्वा[ः] । | * * °मृशं ... |
| | उच्चितस् तम्बो स्त्रिया गाव आ रोहिणीर् इव ता इतो नाशयामसि ॥८॥ | ...रोहिमेर् इवा * चितो * |
| | या× पिण्यात् संभवन्तीन्द्रजा नस् सदान्वा[ः] । | |
| | अप मृत्युम् इवाहन्तुं पुनस् त्वा प्रति दध्मसि ॥९॥ | * * °हन्तुं ... |
| | आमादिनीश् च क्रुरादिनीर् अनग्निदग्धादिनीः । | * * अनग्निगन्धादिनी |
| | अमुं परेभ्यो दुर्तं शावम् अत्त सदान्वाः । | ... स्वदान्वा |
| | शाव× केवल आचार× किम् उ शालास्य् उच्छ्रितः ॥१०॥ ॥का° १॥ | * केवलाचार...उच्छ्रितः ॥१०॥ कदच ॥१॥ |
| सुदुर्गमम् एतत् सूक्तम् | **१७.१५** | |
| | या× कुमारीर् यास् त्व् अवीरा युवतीर् यास् सदान्वा[ः] । | ... अविरा ... |
| | सर्वा यन्तु कुरुकुमी[×] कुलीना धेनु[स्] सर्पन्तु रायी रथिभा हिता ॥१॥ | |
| | ताभ्यो रुद्रो वि सृजत्व् अमघमघ्य् अघघात्विनी । | |
| | तास् त्वा हन्तु विद्युता वज्रेणानपराधिना । | ... °नपराधिनाः |
| | तासान्तं शाक मोच्छिषम् इन्द्र भण्डा× फलीकुरु ॥२॥ | |
| | कुमारान् एका स्थविरान् या [अ]दन्ति प्रघातिनी[ः] । | |
| | ता इन्द्रो हन्तु वृत्रहा यो देवो विश्वाद् रक्षांसि सेधतु ॥३॥ | ताम् ... |
| | याश् च दासीर् असुराणां मनुष्येभ्यश् च या× कृताः । | |
| | उभयीस् ता× परा यन्ति परा यन्ति परावतो नवतिं नाव्या [अ]ति ॥४॥ | उभेदस् ... परावति * * * |
| | या निशां यथास्थमाद् रात्री यज्ञाणि प्रेरते । | |
| | अग्निष् टा सर्वा सस्तोका विश्वाद् रक्षांसि सेधतु ॥५॥ | * टुवा * सम्तो * * सीधतु |
| | या रक्षीक× कलिलान्ता [अ]प्सु जाता× पुरीकया । | |
| | गोपा [आ]साम् एको वेद यतो जातास् सदान्वास् ता इतो नाशयामसि ॥६॥ | ... जातस् * * चितो * |
| | यासां घोषास् संगता वृकाणाम् इव गच्छन । | ...वृकानाम् * * |
| | मूषं कशाम् अयिचारं प्रवच्छन्तीं प्रतिग्रहा नाशयामस् सदान्वा[ः] ॥७॥ | ... नाशयामस् * |
| | गुरुच्छाया मूलदार्य शिशुमार्का प्रतिभुका । | |
| | अति तुष्णा व्यतरन्तीं व्यतुलिमाम् । | |
| | सर्वाश् चण्डसनप्त्यो नाशयामस् सदान्वा[ः] ॥८॥ | |
| | यावन्तीं नामदुकां त्वं स्तनीकां वृन्धपतीम् । | |
| | उत्क्षिपन्तीम् अनामिकां नाशयामस् सदान्वा[ः] ॥९॥ | ... नाशवामस * |
| | वावदाकाम् अस्मगालां विजञ्झां चर्चू चमुम् । | |
| | रायीं वातमेजयान् नाशयामस् सदान्वा[ः] ॥१०॥ ॥का° ४॥ ॥अनु° १॥ | ...॥१०॥ कदच ॥४॥ |

## १७.१६

| | | |
|---|---|---|
| शौ १२.४.१ | ददामीत्य् एव ब्रूयाद् अनु चैनाम् अभुत्सत । | ...अभुत्सतः |
| | वशां ब्रह्मभ्यो याचद्भ्यस् तत् प्रजावद् अपत्यवत् ॥१॥ | * * याचमद्भ्यस् * * * |
| शौ २ | प्रजया स वि क्री[णी]ते पशुभिश् चोप दस्यति । | प्रजय स्तु... |
| | य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ॥२॥ | * * याचमद्भ्यो * * नि दधति |
| शौ ३ | कूटयास्य सं शीर्यन्ते श्लोणया काटम् अर्दति । | |
| | बण्डया दह्यन्ते गृहा× काणया दीयते स्वम् ॥३॥ | बबन्धूया * स्ताहा * ओयते * |
| शौ ४ | विलोहितो अधिष्ठानाच् छक्नो विन्दति गोपतिम् । | ...क्कुनो * * |
| | तथा वशायास् संविद्यं दुरदभ्ना ह्य् उच्यसे ॥४॥ * | * * यांविद्यु दुरितभ्राष्यसे |
| शौ ६ | यो ऽस्या× कर्णाव् आस्कुनोत्य् आ स देवेषु वृश्चते । | * * कलाव् आस्कनोम्य् आम्या * * * |
| | लक्ष्म कुर्व इति मन्यते कनीय× कृणोति स्वम् ॥५॥ | लक्ष्मीः कुर्वीत मस्यते कतिग्रुः * * |
| शौ ५ | पदोर् अस्या [अ]धिष्ठानाद् विक्लिन्दुर् नाम विन्दति । | पदोव् * * विकुकंहिन् * * |
| | अनामनात् सं शीर्यन्ते या मुखेनोपजिघ्रति ॥६॥ | अनामनात् * * आह * |
| शौ ८[१.२] | यद् अस्या गोपतौ सत्या लोम ध्वाङ्क्षो अजीहिडत् । | ...मत्वा * * अजीहडत् |
| शौ ७[३.४] | तत× किशोरा म्रियन्ते वत्सांश् च घातुको वृकः ॥७॥ | * कुशोरा ...घाको वृका |
| शौ ७[१.२] | यद् अस्या× कस्मै चिद् भोगाय बालान् कश् चित् प्रकृन्तति । | |
| शौ ८[३.४] | तत× कुमारा म्रियन्ते यक्ष्मश् चरत्य् अनामनात् ॥८॥ | * * मृयन्ते यक्ष्माश् चरत् सत्यनाम्नः |
| शौ ९ | यद् अस्या× पल्पूलनं शकृद् देवी समस्यति । | * अस्य पुल्पुलनाय मकृद् * * |
| | ततो ऽपरूपं जायते तस्माद् अव्येष्यद् एनसः ॥९॥ | * पिरूपं * * द्रव्येष्वंतेनसा |
| शौ १० | जायमानाभि जायते देवान् सब्राह्मणान् वशा । | जायमानोऽभि * * * पचसा |
| | तस्माद् ब्रह्मभ्यो देयैषा तद् आहुस् स्वस्य गोपनम् ॥१०॥ ॥का° १॥ | * * देयीषा ...सस्य * |

## १७.१७

| | | |
|---|---|---|
| शौ १२.४.११ | य एनां वनिम् आयन्ति तेषां देवकृता वशा । | ...आयान्ति... |
| | ब्रह्मज्येयं तद् अब्रुवन् य एनां नु प्रियायते ॥१॥ | °ब्रुवन्... |
| शौ १२ | यो देवानां [गां] याचद्भ्य आर्षेयेभ्यो न दित्सति । | य एनां याचमध्व * नि दधति |
| | आ स देवेषु वृश्चते ब्राह्मणानां च मन्यवे ॥२॥ | ...वृश्चन्ते... |
| शौ १३ | यस्यान्य[त्] स्याद् वशाभोगो ऽन्याम् इच्छेत तर्हि सः । | ...इच्छेतु यहि यः |
| | हिंस्याच्चिभस्त्वा ? गोपतिं याचितां च न दित्सति ॥३॥ | |
| शौ १४ | यथा शेवधिर् निहितो ब्राह्मणानां तथा वशा । | ...वदद् * |
| | ताम् एतद् आयन्ति यस्मिन् कस्मिंश् च जायते ॥४॥ | |
| शौ १५ | स्वम् एतद् आयन्ति यद् वशां ब्राह्मणा अभि । | सम् * * यदद * ब्राह्मणाभिः |
| | यथैतान् अन्यज् जिनीयाद् एवास्या [अ]धिरोहणम् ॥५॥ | * अन्यज् जवियाद् एवस्या * |
| शौ १६ | चरेद् एवा त्रैहायणाद् अविज्ञातगदा सती । | ...अविज्ञातकदा सति |
| | वशां च विद्यान् नारद ब्राह्मणास् तर्ह्य् एष्याः ॥६॥ | ...तर्हि ष्या |
| शौ १७ | य एनाम् अवशाम् आह देवानां निहितं निधिम् । | ...आह * महितं * |
| | उभौ तस्मै भवाशर्वौ परिक्रम्येषुम् अस्यतः ॥७॥ | ...परिक्रमेष सस्यच |
| शौ १९ | दुरदभ्नैनम् आ शये याचितां च न दित्सति । | दुरितबीन पाशये याचताञ्चनु दिस्सति |
| | नास्मै कामास् सम् ऋध्यन्ते याम् अदत्त्वा चिकीर्षति ॥८॥ | * कामस् * ऋद्यते यम्... |
| शौ १८ | यो ऽस्या ऊधो न वेद यो ऽस्या[स्] स्तनान् उत । | * * दुधो न् वेद * * * उमा |
| | उभयेनैवास्मै दुहे दातुं चेद् अशकद् वशाम् ॥९॥ | उभेनैवैमां * * * अशकिद् * |
| शौ २० | देवा वशां याचन्ति मुखं कृत्वा ब्राह्मणम् । | |
| | तेषां च सर्वेषाम् अददद् धेडं न्य् एति मानुषः ॥१०॥ ॥का° २॥ | * * * अनदध्येडं नयति मानुषा ॥१०॥ |
| | | [काण्ड ॥२॥ |

## १७.१८

| | | |
|---|---|---|
| शौ १२.४.२१ | हेडं पशूनां न्य् एति ब्राह्मणेभ्यो ऽददद् वशाम् । | * * नयति * * * |
| | देवानां निहितं भागं मर्त्यश् चेन् नु प्रियायते ॥१॥ | * * भाग वृक्त से * * |

| | | |
|---|---|---|
| शौ २२ | यद् अन्ये शतं याचेयुर् ब्राह्मणा गोपतिं वशा[म्] । | इदं मे शते... |
| * | अथैतां देवा [अ]ब्रुवन्न् एवं ह विदुषो वशा ॥२॥ | * * * तेवो * विदुषो * |
| शौ २३ | य एवं विदुषे ऽदत्त्वाथान्यस्मै ददद् वशा[म्] । | * * * दत्वाथथान्यशो * * |
| | दुर्गा तस्मा [अ]धितिष्ठाने पृथिवी सहदेवता ॥३॥ | ...पृथिवीत् * |
| शौ २४ | देवा वशाम् अयाचन् यस्मिन्न् अग्रे अजायत । | * * अयाचं अस्मिन्न् * अजायते |
| | ताम् एतां विद्यान् नारदस् सह देवैर् उद् आजत ॥४॥ | * * विद्यां नरदस् * देवैर् * आजिता |
| शौ २५ | अनपत्यम् अल्पपशुं वशा कृणोतु पूरुषम् । | ...पौरुषम् |
| | ब्राह्मणैश् च याचिताम् [अथैनां] नु प्रियायते ॥५॥ | ...प्रियायत |
| शौ २६ | अग्नीषोमाभ्यां कामाय मित्राय वरुणाय च । | * * मितां * * |
| | येभ्यो याचन्ति ब्राह्मणास् तेभ्य आ वृश्चते ऽददत् ॥६॥ | * * * तेभ्या * ददत् |
| शौ २७ | यावद् अस्या गोपतिर् नोपभृणुयाद् ऋचस् स्वयम् । | * अस्यां * नोपभृणुयाद् ऋच * |
| | चरेद् अस्य तावद् गोषु नास्य श्रुत्वा गृहे स्यात् ? ॥७॥ | तेर तस्य ... श्रुता * स्य |
| शौ २८ | यो ऽस्या ऋच उपश्रुत्याथ गोष्व् अचीचरत् । | * * स्योपश्रुत्याथ ... |
| | आयुश् च तस्य शुभं च देवा वृश्चन्तु हेडिताः ॥८॥ | * * * इछभं * * वृश्चन्त हेडता |
| शौ २९ | वशा चरन्ती बहुधा देवानां निहितो निधिः ८ . | ...देवतां * * |
| | आविष् कृणुष्व रूपाणि यथा स्थाम जिघांसति ॥९॥ | |
| शौ ३० | [ आविर् आत्मानं कृणुते यथा स्थाम जिघांसति ] । | |
| | उतो ह ब्रह्मभ्यो वशा याच्ञ्याय कृणुते मनः ॥१०॥ ॥का° ३॥ | * * ब्राह्मभ्यो वशाय । अद्याय कृणुते नमः [॥१०॥फश्च३॥ |

१७.१९

| | | |
|---|---|---|
| शौ १२.४.३१–४० | मनसा सं कल्पयति तद् देवान् अपि गच्छति । | |
| | ततो ह ब्रह्माणो वशाम् उपप्रयन्ति याचितुम् ॥१॥ | * * ब्राह्मणो * °यन्ती * |
| | स्वधाकारेण पितृभ्यो यज्ञेन देवेभ्यः । | |
| | दानेन राजन्यो वशाया मातुर् हेडं न गच्छति ॥२॥ | * राजन्यो * * हेडनम् अगच्छति |
| | वशा राजन्य ते माता तथा संभूतम् अग्रशः । | वशा राजन्य ते माता स्तथा * अकशः |
| | तस्या [आ]हुर् अनर्पणं यद् ब्रह्मभ्यः प्रदीयते ॥३॥ | |
| | यद् आज्यं प्रतिजग्राहम् ? आलुम्पेत् स्रुचो अग्नये । | ...स्रुगो * |
| | ततो ऽब्राह्मणो वशाम् अग्नये वृश्चते ऽददत् ॥४॥ | * ब्रह्माणो * अग्नेये * ददत |
| | पुरोडाशवत्सा सुदुघा लोके ऽस्योप तिष्ठति । | * सदुघा ... |
| | तस्मै सर्वान् कामान् दुहे वशा प्रददुषे दुहे ॥५॥ | सहस्से * * दुही * प्रीतिददे * |
| | सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे । | ...प्रतिदुहे * |
| | तथाहुर् नारकं त्व् एकं निरुन्धानस्य याचिताम् ॥६॥ | ... निरुन्धानिश्च * |
| | प्रवीयमाना चरति क्रुद्धा गोपतये वशा । | प्रवीयमाना... |
| | वेहतं मा मन्यमानो मृत्योः पाशेषु बध्यताम् ॥७॥ | ...मृतोः * बद्धयताम् |
| | यो वेहतं मन्यमानो गृहेषु पचते वशाम् । | |
| | अप्य् अस्य पुत्रान् पौत्रांश् [च] चातयते बृहस्पतिः ॥८॥ | अस्य स्व ... |
| | महद् एषाव तपति चरन्ती गोषु गौर् अपि । | सहाद् एशा चर्वतति * * गोर् * |
| | ततो गोपतये वशाददुषे विषं दुहे ॥९॥ | ... विषहम् * |
| | प्रियं पशूनां भवति यद् ब्रह्मभ्यः प्रदीयते । | प्रियां... |
| | अथो वशायास् तत् प्रियं यद् देवत्रा हविर् अस्याः ॥१०॥ ॥का° ४॥ | ...देवता * अस्य; ॥ फश्च४ ॥ |

१७.२०

| | | |
|---|---|---|
| शौ १२.४.४१–५३ | या वशा उद् अकल्पयन् देवा यज्ञाद् उदेत्य । | * यज्ञाद् * अकल्पवे * यज्ञान् * |
| | तासां विलिप्त्यं भीमाम् उदाकुरुत नारदः ॥१॥ | * विल्पति * उदाःकुरुत नारदा |
| | तां देवा [अ]मीमांसन्त वशायाम् अवशेति । | ...वशेयांन्त वशेति |
| | ताम् अब्रवीन् नारद एषा वशानां वशतमा ॥२॥ | ताम् आव्रवी * येषा वशावां * |
| | कति नु वशा नारद यास् त्वं वेत्थ मनुष्यजा[ः] । | कत न * * * तं * * |
| | कतमासां भीमतमा यस्या नाश्नीयाद् अब्राह्मणः ॥३॥ | कतिमामां...नाश्नीयाथ ब्राह्मणा |

विलिप्त्या बृहस्पते या च सूतवशा वशा ।
तासां नाश्नीयाद् अब्राह्मणो य आशंसेत भूत्याम् ॥४॥
नमस् ते ऽस्तु नारदानुष्ठु विदुषे वशा ।
कतमासां भीमतमा याम् अदत्त्वा पराभवे[त्] ॥५॥
विलिप्ती [या] बृहस्पते या च सूतवशा वशा ।
तासां नाश्नीयाद् अब्राह्मणो य आशंसेत भूत्याम् ॥६॥
त्रीणि वै वशाजातानि विलिप्ती सूतवशा वशा ।
ता× प्र यच्छेद् ब्रह्मभ्यस् सो ऽनाव्रस्क× प्रजापतौ ॥७॥
एतद् वो ब्राह्मणा हविर् इति मन्वीत याचितः ।
वशां चेद् एनं याचेयुर् या भीमाददुषो गृहे ॥८॥०
देवा वशाम् उपावदन् स नो राजत ? हेडिता[ः] ।
एताभिर् ऋग्भिर् भेदस्य तस्माद् वै स पराभवत् ॥९॥
उतैतां भेदो नाददाद् वशाम् इन्द्रेण याचितः ।
तस्मा[त्] तं देवा एनसो वृश्चिषाद् ? अहमुत्तरे ॥१०॥
ये वशाया [अ]दानाय वदन्ति परिरापिणः ।
इन्द्रस्य मन्यवे जाल्मा [आ] वृश्चन्ते ऽचित्त्या ॥११॥
ये गोपतिं पराणीयाथाहुर् मा ददा इति ।
रुद्रस्यास्तां हेतिं ते परि यन्त्य् अचेतसः ॥१२॥
यदि हुतां यद्य् अहुताम् अमा वा पचते वशाम् ।
देवान् सब्राह्मणान् ऋत्वा जिह्मो लोकान् निर् ऋच्छति ॥१३॥ ॥का॰५॥
॥अनु॰४॥

१७.२१

असृक् मांसं त्वचं पेष्ट्रं संभरणम् अंसान् शरीरम् अग्नि× क्रव्याद् अत्त्व्
अमुष्यामुष्यायणस्यामुष्या× पुत्रस्य ॥१॥
प्रातर्यावद्भ्यो देवेभ्यस् सायंयावद्भ्यो देवेभ्यो विश्वदानीयावद्भ्यो
देवेभ्यो अमुम् आमुष्यायणम् अमुष्या× पुत्रम् आ वृश्चामि ॥२॥
वैश्वानराय क्षिप्रधन्वने अमुम् आमुष्यायणम् अमुष्या× पुत्रम् आ
वृश्चामि ॥३॥
क्षिप्रधन्वम् क्षिप्रहस्तामुम् आमुष्यायणम् अमुष्या× पुत्रं ? इदं अक्रम्
न तस्थे प्रवृश्च्या ? ॥४॥
इन्द्राग्निभ्यां प्रजापतये परमेष्ठिने सोमाय राज्ञे वरुणाय राज्ञे पूष्णे धात्रे
सवित्रे त्वष्ट्रे अमुम् आमुष्यायणम् अमुष्या× पुत्रम् आ वृश्चामि ॥५॥
उषसे अह्ने रात्र्यै सूर्यायामुम् [आमुष्यायणम् अमुष्या× पुत्रम् आ
वृश्चामि] ॥६॥
वीरुद्भ्य ओषधीभ्यो वनस्पतिभ्यो वानस्पत्येभ्यो अमुम् [आमुष्यायणम्
अमुष्या× पुत्रम् आ वृश्चामि] ॥७॥
इदावत्सराय परिवत्सराय संवत्सराय बृहते विश्वरूपायामुम् [आमुष्या-
यणम् अमुष्या× पुत्रम् आ वृश्चामि] ॥८॥
अद्भ्यस् संवत्सरायामुम् [आमुष्यायणम् अमुष्या× पुत्रम् आ वृश्चामि] ॥९॥
॥का॰१॥

१७.२२

दिग्भ्यो अन्तर्देशेभ्य आशाभ्य आशापालेभ्यो अमुम् [आमुष्यायणम्
अमुष्या× पुत्रम् आ वृश्चामि] ॥१॥
ऋतुभ्य आर्तवेभ्यो अधिपतिभ्य आधिपत्येभ्यो अमुम् [आमुष्यायणम्
अमुष्या× पुत्रम् आ वृश्चामि] ॥२॥
वसुभ्यो रुद्रेभ्यस् साध्येभ्य आप्तेभ्यो अमुम् [आमुष्यायणम् अमुष्या×
पुत्रम् आ वृश्चामि] ॥३॥
ऋषिभ्य आर्षेयेभ्यो ऽङ्गिरोभ्य आङ्गिरसेभ्यो अमुम् [आमुष्यायणम्

'शो * * अदद् इति हीडिताः
शो अनुवदन्

विलुप्त्या ... सूतवशा *
* नाश्नीयात् * याश्च शंसेव *
* * * नारदानिष्ठ * वशां
विलुप्ति बृहस्पतये * * मूतावशा *
* नाश्नीयाथ ब्राह्मणो यश्च शंसदे *
... विलुप्तीस् * *
... ब्राह्मण्यस् स्वो नाहस्क *
* अवो * * इत * याजितः
* * एनां यादेयुर् ...
एताभि रिग्भिर् ...
* * नारदाद् ...
* त्वं * वनाश्चो * अहनुत्तरे
* वासाया * * °रापुणाः
यो * पराणीयायथाहुर् * ददा यति
... पर् यन्ति चेतसः
... समा व * *
... निर ऋच्छति ॥ १० ॥ कण्ड ५ ॥
इत्यथर्वणिक पैप्पलादशाखायां सप्तादश काण्डे
[ चतुर्थो नुवाकः
... पेष्ट्र सम्भृणं संसा ...
आ° पुत्रस्या
* * सांयवद्भ्यो ...
देवेभ्य * आमुष्यायेणम् ...
... आमुष्यायेणम् अनुष्यः * *
°धन्वं °हस्ता अमुम् * * पुत्रस्य * *
... पौष्णो *
... आमुष्यायेणम् अनुष्याः * * *
* * रात्रे *
वीरुद्भ्यो ...
यदावत्सराय ...
आङ्गिरस * ॥ कण्ड १ ॥
* °देवेभ्यासाभ्याशापालेभ्यो *
ऋतुभ्यान्तवेभ्यो °पतिभ्याम् अधि° *
वसोभ्यो ...
ऋषिभ्यार्षेभ्यावेभ्यो ङ्गिरोभ्याङ्गिरसेभ्यो *

अमुष्या× पुत्रम् आ वृश्चामि] ॥४॥
मयक्षुभ्यो अश्विभ्यां ब्रह्मणे ब्रह्मणस् पत्ये अमुम् आमुष्यायणम् — ...पते ॰ आमुष्यायेणम्
अमुष्या× पुत्रम् आ वृश्चामि ॥५॥
ये [अ]श्मश चक्रुर् ये ऽश्मरजिष्णवस् तेभ्यस् स्वकृद्भ्यस् स्वकारेभ्यो — ...श्मरजिष्णुस ॰ स्वकृतुभ्यस् स्वकाकेभ्यो
अमुम् [आमुष्यायणम् अमुष्या× पुत्रम् आ वृश्चामि] ॥६॥
ते स्वकृतस् स्वकारा अमुम् [आमुष्यायणम् अमुष्या× पुत्रं परा भाव- — तेभ्यस् स्व×कृतुभ्यस् स्व×कारा ॰
यन्तु] ॥७॥
ये तपश् चक्रुर् ये तपोजिष्णवस् ते[भ्यस्] तपस्कृद्भ्यस् तपस्कारेभ्यो — ...तपोजिष्णुस ॰ तपस्कृत्वस ॰
अमुम् [आमुष्यायणम् अमुष्या× पुत्रम् आ वृश्चामि] ॥८॥
ते तपस्कृतस् तपस्कारा [अ]मुम्॰ [आमुष्यायणम् अमुष्या× पुत्रं परा — ॰ तपस्कृद्भ्यस ॰ ॰
भावयन्तु] ॥९॥
ये ब्रह्म चक्रुर् ये ब्रह्मजिष्णवस् तेभ्यो ब्र[ह्म]कृद्भ्यो ब्रह्मकारेभ्यो अमुम् — ...ब्रह्मजिष्णुस्...
आमुष्यायणम् अमुष्या× पुत्रम् आ वृश्चामि ॥१०॥ — आमुष्यायेणम्...
ते ब्रह्मकृतो ब्रह्मकारा अमुम् आमुष्यायणम् अमुष्या× पुत्रं परा भाव- — ॰ ॰ ॰ मम् आमुष्यायेणम्...
यन्तु ॥११॥
अघारिणीम् अमूम् अघविद्धां विकेशीम् उप प्रतिमा सोक्तम् ? देवमनुष्या× — ॰ ॰ ॰ विकेशीम्...
पश्यन्तु ॥१२॥
वयांसि शकुनयो ऽमुम् आमुष्यायणम् अमुष्या× पुत्रं [परा भाव- — ॰ शकुनवयो ॰ आमुष्यायेणम्...
यन्तु] ॥१३॥
कलुषीर् अलिक्लवशाका गृध्रा× कङ्कास् सुपर्णाश् श्वापदा× पतत्रिणो — कलुषीन् अलिक्लवशाक...
वयांसि शकुनयो [अ]मुम् आमुष्यायणम् अमुष्या× पुत्रम् आदहने — ...आमुष्यायेणम् ॰ पुत्रस्यादहने
चरन्तु ॥१४॥ ॥का॰२॥ — ॰ ॥फश २॥

## १७.२३

शौ ७.८९.३[१.२] [प्]तद् आप× प्र वहतावद्यं च मलं च यत् । — ...वाहतावद्यं...
यद् वा दुष्वप्न्यम् आरिमा यद् ? अजा अर्षत ? मूलम् ॥१॥ — ॰ व स्वप्निम्...मूकिम
शौ ७.११२.१[१.४],२[१.२] आपस् सप्त [सु]स्रवन्तीस् ता नो मुञ्चन्त्व् अंहसः ।
मुञ्चन्तु मा शपथ्याद् अथो वारुण्याद् उत ॥२॥
शौ २[३.४],२.१०.१ अथो यमस्य पड्बीशात् विश्वस्मा[द्] देवकिल्बिषात् । — ॰ ॰ पड्विषाद् ॰ °किल्बिषात्
आमिशंसाद् दुष्वप्न्याद् द्रुहो मा मुञ्चन्तु वरुणस्य पाशात् ॥३॥ — जह्यामिशंसाद् ॰ द्रुहे...
मह्यम् इन्द्रो वरुणो बृहस्पतिस् सविता वर्चो दधन् । — ...वर्चे दधं
? भ्रातृव्यं सो सपत्नास सो मे भ्रातृव्यं सो सपत्नः ।
तं हन्मि तं दुष्वनेन विध्यामि तम् उना इष्टायावेन विध्यामि तं — त ॰ ॰ ॰ विधति...
क्षीतायवेन विध्यामि तम् अधराञ्चं मृत्युम् अधमस्य ? पुरोडाशी ॥४॥ — ...अधनस्य (उपरि स्य) पुराडासी ॥ क ३ ॥
॥का॰३॥

## १७.२४

विद्म ते स्वप्न जनित्रं पाप्मन× पुत्रो ऽस्य् अभूत्या [अ]धिजातो यमस्य — ॰ ॰ स्वप्ने...
करणः ।
तं त्वा स्वप्न तथा विद्म । — ...विद्मा
यो ऽभद्रस् स्वप्नस् स्वप्नमय× पद्मस् तं द्विषते प्र हिण्म ॥१॥
तम् अस्मै गमयामस् तेनैनं विध्यामो ऽभूत्यैनं विध्यामो निर्भूत्यैनं विध्याम× — ...विद्ध्यामो निभूत्यैनम् विधाम×
पराभूत्यैनं विध्यामो ग्राह्यैनं विध्यामस् तमसैनं विध्यामो अग्निनैनं — ॰ विधामो ग्राह्येनं विधामस् चमसयैनं विधामो
क्रव्यादा वृश्चामः ॥२॥ — क्रव्याधा ॰ [अधेदं
देवानाम् एनं घोरै× क्रूरै× प्रैषैर् अपि प्रेष्यामो वैश्वानरस्यैनं दंष्ट्रयोर् ऽपि — ...प्रेष्याद् ॰ पेष्यामो ॰ दंष्ट्रयोर् ॰
दध्म[ः] ॥३॥
[विद्म ते स्वप्न] जनित्रं ग्राह्या× पुत्रो ऽसि निर्ऋत्या [अ]धि[जातो यमस्य — ...स निरित्या ॰
करणः ।
[तं त्वा स्वप्न तथा विद्म ।

| | | |
|---|---|---|
| | ये गन्धर्वा [अ]प्सरसश् च देवीर् एषु वानस्पत्येषु ये ऽधि तस्थुः । | ...एष वानस्पत्येडा भ्वा वि * |
| | स्योनास् ते अस्यै वध्वै भवन्तु मा हिंसिषुर् वहतुम् उह्यमानम् ॥१०॥ ॥का°१॥ | * धी * वध्वी ... ॥ १ ॥ |

१८.८

| | | |
|---|---|---|
| शौ १० | ये वध्वश् चन्द्रं वहतुं यक्ष्मा यन्तु जनाँ अनु । | ...यक्ष्म ... |
| | पुनस् तान् यज्ञिया देवा नयन्तु यत आगताः ॥१॥ | पुरस् ... |
| शौ ११ परिपन्थिनो | मा विदन् पर्यायणो ? य आसीदन्ति दंपती । | ...य आसीदंती * |
| | सुगेन दुर्गम् अतीताम् अप द्रान्त्व् अरातयः ॥२॥ | * दुर्गं पीतहिताम् * * * |
| शौ १२ | सं काशयामि वहतुं ब्रह्मणा गृहैर् अघोरेण चक्षुषा मैत्रेण । | |
| | पर्याणद्धं विश्वरूपं यद् अस्ति स्योनं पतिभ्यस् सविता कृणोतु तत् ॥३॥ | * * यरिमम् स्योनं ... |
| शौ १३ अस्यै विदेश | शिवा नारीयम् अस्तम् आगन्न् इमं धाता लोकम् अस्यै विवेद । | * नार्यम् अस्तुम् आगम् ... |
| | ताम् अर्यमा भगो अश्विनोभा प्रजापतिः प्रजया वर्धयन्तु ॥४॥ | ...अश्विनोभाः ... [ वपन्त * अस्याः |
| शौ १४ | आत्मन्वत्य् उर्वरा नारीयम् आगन् यस्यां नरो वपत बीजम् अस्याम् । | म ? ता न्व ? त्य वे ? रा नार्यम् आगं * * |
| शौ दुग्धम् ऋषभस्य रेतः | सा वः प्रजां जनयद् वक्षणाभ्यो बिभ्रती ; दुग्धम् ऋषभस्य रेतः ? | इछा * * जनयाद् ... |
| शौ १५ | [प्रति तिष्ठ विराड् असि विष्णुर् इवेह सरस्वति । | |
| | [सिनीवालि] प्र जायतां भगस्य सुमताव् असत् ॥६॥ | * * जयतां ... |
| शौ १६ उद् व ऊर्मिः | उद् वातीव् ? ऊर्मिश् शम्ये हन्त्व् आपो योक्त्राणि मुञ्चन्तु । | * * ऊर्मुं भ्यंमे * * योप्राणि मुञ्चतु |
| | मा दुष्कृतौ व्येनसाव् अघ्न्याव् अशुनम् आरताम् ॥७॥ | मु दुष्कृतौ व्येनसाघ्न्यौ शुनम् * |
| शौ १७[१.२] | अघोरचक्षुर् अपतिघ्न्य् एधि स्योना शग्मा सुशेवा सुयमा गृहेषु । | ...शंग्मा सशेवा ... |
| शौ १८[३.४] | प्रजावती वीरसूर् देवृकामेमम् अग्निं गार्हपत्यं सपर्य ॥८॥ | प्रजावती वीरसौर् देवृकामेमम् * गार्हपत्यं सपर्य |
| शौ १८[१.२] | अदेवृघ्न्य् अपतिघ्न्य् एधि स्योना पशुभ्यस् सुमना सुवीरा । | अदेवरघ्न पतिरघ्न्य * स्योनः पशुभ्यस् |
| शौ १७[३.४] | वीरसूर् देवकामा सं त्वयैधिषीमहि सुमनस्यमाना ॥९॥ | वीरसूर् * स्योनान् त्वेधिषीमहि * [सुमनम् सुवीरः |
| शौ १९ | उत्तिष्ठतः ? किम् इच्छन्तीदम् आगा अहं त्वेडे अभिभूस् स्वाद् गृहात् । | उत्तिष्ठादः * इच्छन्त्वेदम् * हम् त्वेदे * स्वाद् गृहा |
| | शून्यैषी निर्ऋते याजगन्थोत्तिष्ठाराते प्र पत मेह रंस्थाः ॥१०॥ ॥का°२॥ | अशून्यैषी निर्ऋती ... मंस्थि रंस्था ॥२॥ |

१८.९

| | | |
|---|---|---|
| शौ १४.२.२० | यदा गार्हपत्यम् असपर्यैत् पूर्वम् अग्निं वधूर् इयम् । | * गार्हपत्याम् असिपर्यैवैः ... |
| | अधा सरस्वत्यै नारि पितृभ्यश् च नमस् कुरु ॥१॥ | ...पितृभ्यश् ... |
| शौ २१ | शर्म वर्मैतद् आ हरास्यै नार्या उपस्तरे । | ...उपास्थिरे |
| | सिनीवालि प्र जायतां भगस्य सुमताव् असत् ॥२॥ | |
| शौ २३ | उप स्तृणीहि बल्बजम् अधि चर्मणि रोहिते । | * स्तृणीह ... रोहते |
| | तत्रोपविश्य सुप्रजा इमम् अग्निं सपर्यतु ॥३॥ | * * इम ग्न्वं * |
| शौ २२ | [यं] बल्बजं न्यस्य[थ] चर्म चोपस्तृणीथन । | ...णोपस्तृणीथिनः |
| | तद् आ रोहतु सुप्रजा या कन्या विन्दते पतिम् ॥४॥ | |
| शौ २४[१.२] | आ रोह चर्मोपसीदाग्निम् एष देवो हन्तु रक्षांसि सर्वा । | ... देवं * * * |
| शौ २५[३.४] | सुमङ्गल्य् उप सीदेमम् अग्निं संपत्नी प्रति भूषेह देवान् ॥५॥ | ...देवाम् |
| शौ २५[१.२] | प्र जायन्तां मातुर् अस्या उपस्थान् नानारूपाः पशवो जायमाना[ः] । | * * मातु रुस्या दुस्थां ... |
| शौ २४[३.४] जनय | इह प्रजां संजनो ? पत्ये ऽस्मै सुज्यैष्ठ्यो भवतु ते पुत्र एषः ॥६॥ | * प्रजा ... सुज्येष्ठो ... |
| शौ २६ | सुमङ्गली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः । | ...सम्भुम् |
| | स्योना श्वश्र्वै प्र गृहान् विशेमान् प्रजावती जरदष्टिर् यथासत् ॥७॥ | * स्वश्रुषी * * विशेमां ... |
| शौ २८ | सुमङ्गलीर् इयं वधूर् इमां समेत पश्यत । | सुमङ्गलीर् * * इमी ... |
| | सौभाग्यम् अस्यै दत्त्वा दौर्भाग्येन परेतन ॥८॥ | सौभाग्यम् अस्यै ... |
| शौ २९ | या दुर्हार्दो युवतयो याश् चेह जरतीर् अपि । | * दूहार्दो * यश् * चरतिर् * |
| | वर्चो न्व् अस्यै संदत्ताथास्तं वि परेतन ॥९॥ | ...सन्दत्तावधास्त न्व * |
| शौ ३० | रुक्मप्रस्तरणं वह्यं विश्वा रूपाणि बिभ्रतम् । | |
| | आरोह[त्] सूर्या सावित्री बृहते सौभगाय कम् ॥१०॥ ॥का° ३॥ | ...बृहती * * ॥३॥ |

## १८.१०

| | | |
|---|---|---|
| शौ १४.२.११ | आ रोह तल्पं सुमनस्यमानेह प्रजां जनय पत्ये अस्मै । | * * * °मानेहह * जने * * |
| | इन्द्राणीव सुता बुध्यमाना ज्योतिरग्रा उषस× प्रति जागरः ॥१॥ | ...ज्योतिरग्रा * पति चाकरः |
| शौ ३१ | देवा अग्रे न्य् अपद्यन्त पत्नी[स्] सं व् अस्पृशन्त तन्वस् तनूभिः । | देवाग्रे न्य् * * * * अस्पृशन्ति * * |
| | सूर्येव नारि विश्वरूपा महित्वा प्रजावती पत्या सं भवासि ॥२॥ | ...पत्ये * भवासिर |
| शौ ३३ च १०.८५.२१ | उद् ईर्ष्वात× पतिवती ह्य् एषा विश्वावसुं नमसा गीर्भिर् ईडे । | * * पती * एषां... |
| | जामिम् इच्छ पितृषदं न्यक्तां स ते भागो जनुषा तस्य विद्धि ॥३॥ | * * पितृुष न्वक्तां... |
| शौ ३४ | या [अ]प्सरसस् सधमादं मदन्त्य् अन्तरा हविर्धानं सूर्यं च । | * * * पर्तन्य्... |
| | तास् ते जनित्रम् अभि ता× परेहि नमस् ते गन्धर्वर्तुना कृणोमि ॥४॥ | ...गन्धर्वतमना * |
| शौ ३५ | नमो गन्धर्वस्य मनसे ? नमो भामाय चक्षुषे च कृण्मः । | * * मनसो * भासाय... कृण्व |
| | विश्वावसो नमो ब्रह्मणा ते कृणोम्य् अभि जाया अप्सरस× परेहि ॥५॥ | ...ब्रह्मणान् * * * चर्वाप्सरस * |
| शौ ३६ | राया वयं सुमनस[स्] स्यामोद् इतो गन्धर्वम् आवीवृताम । | ..आवीवृताम् |
| शौ यत्र | अगन् स देव× परमं सधस्थम् अगन्म वयं ? प्रतिरन्त आयुः ॥६॥ | अगन्म्... |
| शौ ३७ | सं पितराव् ऋत्विये सृजेथां पिता माता च रेतसो भवाथ[ः] । | * * ऋतये सृजेतां * * ज... |
| | वर इव योषाम् अधि रोहयैनां प्रजां कृण्वाथाम् इह मोदमानौ ॥७॥ | वरीव योषामाम् * रोहयेनां * कृण्वाथाम् * [रोदमानो |
| शौ ४० | आ वां प्रजां जनयतु प्रजापतिर् अहोरात्राभ्यां सम् अनक्त्व् अर्यमा । | |
| | अदुर्मङ्गली× पतिलोकम् आ विश शं नो अस्तु द्विपदे शं चतुष्पदे ॥८॥ | |
| शौ ३८ | तां पूषञ् छिवतमाम् एरयस्व यस्यां बीजं मनुष्या वपन्ति । | |
| | या न ऊरू उशती विश्रयाते यस्याम् उशन्त× प्रहरेम शेपः ॥९॥ | ...उषतां * * उषन्त×... |
| शौ ३९ | आ रोहोरुम् उप धत्स्व हस्तं परि ष्वजस्व जायां सुमनस्यमानः । | ...दरस्व... |
| | प्रजां कृण्वाथाम् इह पुष्यतं रयिं दीर्घं त आयुस् सविता कृणोतु ॥१०॥ ॥का°४॥ | ...पुष्यतुनो * * त्वायुम् .* कृणुतु ॥४॥ |

## १८.११

| | | |
|---|---|---|
| शौ १४.२.४२ यं मे दत्तो | यं नो दिनि? ब्रह्मभागं वधूयोर् [वाधूयं] वासो वध्वश् च वस्त्रम् । | वन्... |
| | युवं ब्रह्मण इदं मन्यमानौ बृहस्पते साकम् इन्द्रश् च दत्तम् ॥१॥ | * ब्रह्मणेद मन्यमानो * * * * चत्ताम् |
| शौ ४१ | देवैर् दत्तं मनुना साकम् एतद् वाधूयं वध्वो वासो ऽस्याः । | * * मनुना * एताद् * वध्वो... |
| | यो ब्रह्मणे चिकितुषे ददाति स इद् रक्षांसि तल्प्यानि हन्ति ॥२॥ | ये * * * * यद् * तृप्यानि * |
| शौ ४३ | स्योनाद् योनेर् अधि बुध्यमानौ हसामुदौ महसा मोदमानौ । | ...हसारो * * |
| | शुभौ सुपुत्रौ सुकृतौ चराथो जीवाव् उषसो विभाती[ः] ॥३॥ | शुभो * * चरातो चरातो जीवा * * |
| शौ ४४ | नवं वसानस् सुरभिस् सुवासा उदागां जीव उषसो विभाती[ः] । | ...सवासो दागा जीच * * |
| | आण्डात् पतत्रीवामुक्षि विश्वस्माद् एनसस् परि ॥४॥ | ...विश्वस्मा चेनसम् * |
| शौ ४५ | शुम्भनी द्यावापृथिवी अन्तिसुम्ने महिव्रते । | * * यन्तुसुम्ने * |
| | आपस् सप्त स्रवन्तीस् ता नो मुञ्चन्त्व् अंहसः ॥५॥ | |
| शौ ४६ | सूर्यायै देवेभ्यो मित्राय वरुणाय च । | |
| | ये भूतस्य प्रचेतसस् तेभ्यो ऽहम् अकरं नमः ॥६॥ | |
| शौ ४७ च ८.१.१२ | यद् ऋते चिद् अभिश्रिष× पुरा जत्रुभ्य आतृदः । | * इते जद् दुर्भिस्तुष× * * आरदः |
| | संधाता संधिं मघवा पुरोवसु[र्] निष्कर्ता विहृतं पुनः ॥७॥ | सधोता... |
| शौ ४८ | अपास्मत् तम उच्छतु नीलं पिशङ्गम् उत लोहितं यत् । | अपास्मद् नन्तमच उच्छं... |
| शौ निर्दहनी या पृषातकी | निर्दहनी या प्रधातक्य् अस्मिन् तां स्थाणाव् अध्य् आ सृजामि ॥८॥ | निर्दहनि त्वं प्रधातक अस्मिन् ता स्थानाव्... |
| शौ ४९ उपवासने | यावती× कृत्या पश्चावाने? ग्रावन्तो राज्ञो वरुणस्य पाशाः । | ...पाशाद् (एष कश्चिच्च शौनक-कोशो ऽपि) |
| | व्यृद्धयो या असमृद्धयश् च या अस्मिन् ता[स्] स्थाणौ मुञ्चामि सर्वाः॥९॥ | च ऋद्धो वम् समृद्धयाश् चावस्मिन् * स्तानो * [सर्वाम् |
| शौ ५१ | ये [अ]न्ता यावती[स्] सि[चो य ओ]तवो ये च तन्तवः । | * * * सिदवो * * * |
| शौ तद्वः स्योनम् उप स्पृशात् | वासो यत् पत्नीभिर् उतं तन्वा स्योनम् उप स्पृशः ॥१०॥ ॥का°५॥ | * * पत्नीभूतं * * * * ॥५॥ |

## १८.१२

| | | |
|---|---|---|
| शौ १४.२.५२ | उशतीं× कन्यला इमा× पितृलोकात् पतिं यतीः । | उशती× कन्यका * पितृलोकात् पति यती |
| | अव दीक्षाम् असृक्षत स्वाहा ॥१॥ | अव दीक्षम् असिरक्षतस् * |

| | | |
|---|---|---|
| शौ ५३ | बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । | बृहस्पतिनावसृष्टां * * अधारयीम् |
| | वर्चो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥२॥ | ... सं सृजामसि |
| शौ ५४ | बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । | ...अधारयीम् |
| | तेजो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥३॥ | ...सं सृजामसि |
| शौ ५७ | बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । | ...अधारयीम् |
| | [प]यो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥४॥ | यो * प्रविष्टो .. |
| शौ ५६ | बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । | ...अधारयीम् |
| | यशो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥५॥ | ...सं सृजा° |
| शौ ५५ | बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । | ...अधारयीम् |
| | भगो गोषु प्रविष्टो यस् तेनेमां सं सृजामसि ॥६॥ | ...सं सृजा° |
| शौ ६० | यद् असौ दुहिता तव विकेश्य् अरुदद् बहु रोदेन कृण्वत्य् अघम् । | यदासौ * * विकेश्य् अरुजत् * रोधेन कृण्वत्य् * |
| | अग्निष् ट्वा तस्माद् एनसस् सविता च प्र मुञ्चताम् ॥७॥ | * वात्... |
| शौ ५९ | यद् अमी केशिनो जना गृहे ते समनर्तिषू रोदेन कृण्वन्तो ऽघम् । | यदसी (उपरि यदासी) * * * * समनृत्येषु |
| | [अग्निष् ट्वा तस्माद् एनसस् सविता च प्र मुञ्चताम्] ॥८॥ | [ * कृण्वतीर् * |
| शौ ६१ | यज् जामयो यद् युवतयो गृहे ते समनर्तिषू रोदेन कृण्वतीर् अघम् । | ...समनृत्सु * कृण्वतो * |
| | [अग्निष् ट्वा तस्माद् एनसस् सविता च प्र मुञ्चताम्] ॥९॥ | |
| शौ नास्ति | यद् अमू दंपती उभौ विवाहे अघम् आरतो रोदेन कृण्वन्ताव् अघम् । | * अमूं * उभे ... कृणुताव् * ॥६॥ |
| | [अग्निष् ट्वा तस्माद् एनसस् सविता च प्र मुञ्चताम्] ॥१०॥ ॥का° ६॥ | |

१८.१३

| | | |
|---|---|---|
| शौ १४.२.६२ | यत् ते प्रजायां पशुषु यद् वा गृहे निष्ठितम् अघकृद्भिर् अघं कृतम् । | ...निष्ठितुर् * * * |
| | अग्निष् ट्वा तस्माद् एनसस् सविता च प्र मुञ्चताम् ॥१॥ | |
| शौ ६३ | [इ]यं नारिर् उप ब्रूते पूल्याण्य् ? आवपन्तिका । | |
| | दीर्घायुर् अस्तु मे पतिर् एधन्तां पितरो मम ॥२॥ | |
| शौ ६४ | इहेमाव् इन्द्र सं नुद चक्रवाकेव दंपती । | एहमाव्... |
| | प्रजावन्तौ स्वस्तकौ दीर्घम् आयुर् व्य् अश्नुताम् ॥३॥ | |
| शौ ६५ | यद् आसन्द्याम् उ[प]धाने यद् वोपवासने कृतम् । | * आसन्द्या... |
| | विवाहे कृत्यां यां चक्रुर् आस्नाने तां नि दध्मसि ॥४॥ | ...तं * * |
| शौ ६६ | यद् दुष्कृतं यच् छमलं विवाहे वहतौ च यत् । | ...विविवाहे वहतो * * |
| शौ संभलस्य | तत् संभरस्य कम्बले मृज्महे दुरितं वयम् ॥५॥ | [ सादयित्वा कम्बले दुरितं वयम् |
| शौ ६७ | संभले मलं सादयित्वा कम्बले दुरितं वयम् । | सम्बले * * * मृज्महे दुरितं वयम् । सम्बले मलं |
| | अभूम यज्ञियाश् शुद्धा× प्र ण आयूंषि तारिषत् ॥६॥ | अभूमि यज्ञेयाश् * प्राणांयोषि तारिषम् |
| शौ ५० | या मे प्रियतमा तनू[स्] सा मे बिभाय वाससः । | ...बिभाय * |
| | तस्याग्रे त्वं वनस्पते नीविं कृणुष्व मा वयं रिषाम ॥७॥ | ...नीवं...रुशाम |
| शौ १८ कण्टकः, कटकः, कंकतः [इति पाठाः | कृत्रिम× कङ्कतश् शतदन् य एषः । | * * * येष |
| | अपास्या× केश्यं मलम् अप शीर्षण्यं लिखा[त्] ॥८॥ | अपाश्यात् केशं * उप * * |
| शौ ६९ वयं दध्मसि | अङ्गाद्-अङ्गाद् यूयम् अस्या अप यक्ष्मं नि धत्तन । | * वोचन् * सुप... |
| | तन् मा प्रापत् पृथिवीं मोत देवान् दिवं मा प्रापद् उर्व् अन्तरिक्षम् । | * * * * * * इमं मा पापन् उर्व्वान्तरिक्षम् |
| | अपो मा प्रापन् मलम् एतद् अग्ने यमं मा प्रापत् पितॄंश् च सर्वान् ॥९॥ | * * प्राणं मलम् ओदद् * निर्मं... |
| शौ ७० | सं त्वा नह्यामि पयसा पृथिव्यास् सं त्वा नह्यामि पयसौषधीनाम् । | * त्व नाह्यामि ... पयसोषधीनाम् |
| | सं त्वा नह्यामि प्रजया धनेन सा संनद्धा सनुहि वाजम् एमम् ॥१०॥ ॥का° ७॥ | ...वाजन् * |

१८.१४

| | | |
|---|---|---|
| शौ १४.२.७१ | अमो ऽहम् अस्मि सा त्वं द्यौर् अहं पृथि[वी त्वं] अमो ऽहम् अस्मि वाक् त्वम् । | ...मम् * * त्वम् |
| | ताव् इह सं भवाव प्रजाम् आ जनयावहै ॥१॥ | ...°वही |

| | | |
|---|---|---|
| शौ ७२ | अ[मि]यन्ति माव् अप्रव× पुत्रि[य]न्तु सुदानवः । | • नो मुवपिवः पिस्वन्तु मदानुगः |
| | अरिष्टासस् सचेमहि बृहते वाजसातये ॥२॥ | अरिष्टाम स्यतेमहि … |
| शौ ७३ | ये पितरो वधूदर्शा इमं वहतुम् आगमन् । | • • °दर्शा निमं वहतुन् आगमम् |
| | ते अस्यै वध्वै संपत्न्यै प्रजावच् छर्म यच्छन्तु ॥३॥ | त स्यै वध्वी संपत्नी • चर्म यच्छन्तु |
| शौ ७४ | येदं पूर्वागन् रशनायमाना प्रजाम् अस्यै द्रविणं चेह दत्त्वा । | इदं पूर्वागं … चत्ताम् |
| | तां वहन्त्व् अगतस्याभि पन्थां विराड् इयं सुप्रजा अत्य् अजैषीत् ॥४॥ | स्वां • अक्तस्याभि … स्य् अजीषी |
| शौ ७५ | प्र बुध्यस्व सुबुधा बुध्यमाना दीर्घायुत्वाय शतशारदाय । | • • सुबध … |
| | गृहान् प्रेहि सुमनस्यमाना दीर्घं त आयुस् सविता कृणोतु ॥५॥ | • प्रीहि °मानो • तायुम् • • |
| शौ ७.७८.१[१.२] | वि ते मुञ्चामि रशनां वि रश्मीन् [वि] योक्त्राणि परिचर्तनानि च । | वि ते • रशनां वि रश्मीन् योक्त्राणि • • |
| | अरिष्टास्मिन् ज्योतिषि शिवा गृहपत्नी भव ॥६॥ | • ज्योतिष … |
| शौ १४.२.२७ | स्योना भव श्वशुरेभ्यस् स्योना पत्ये गृहेभ्यः । | |
| | स्योनास्यै सर्वस्यै विशे स्योनापत्यायैषां भव ॥७॥ ॥का° ८॥ ॥अनु°२॥ | • • • स्योनापत्यावैषा • ॥८॥ इत्यथर्वणिके पैप्पलादयाश् श शाखायाम् अष्टादश-काण्डे द्वितीयो नुवाकः ॥ ॥ |
| शौ १३.१.१-१० | **१८.१५** | |
| | उद् एहि वाजिन् यो [अ]प्स्व् अन्तर् इदं राष्ट्रं प्र विश सूनृतावत् । | • ईहि … विसि • |
| | यो रोहितो विश्वम् इदं जजान स त्वा राष्ट्राय सुभृतं पिपर्तु ॥१॥ | बयो • विश्व भृतं … |
| | उद् वाज [आ]गन् यो [अ]प्स्व् अन्तर् विश आ रोह त्वद्योनयो याः । | … विषा रोह तुयोनयो या |
| | सोमं दधानो ऽप ओषधीर् गाश् चतुष्पदो द्विपद आ वेशयेह ॥२॥ | • दधाना । पोषधीर् • चतुष्पादो द्विपदा वेशयह |
| | यूयम् उग्रा मरुत× पृश्निमातर इन्द्रे[ण] युजा प्र मृणीत शत्रून् । | श्रों यूयम् • • प्रिश्नि° … शत्रून् |
| | आ वो रोहितश् शृणवत् सुदानवस् त्रिषप्ता सो मरुतस् स्वादुसंमुदः ॥३॥ | … त्रिषुमा • स्वादुसंनुदः |
| | रुहो रुरोह रोहितो रुरोह गर्भो जनीनां जनुषाम् उपस्थम् । | … जानिताम् • |
| | ताभिस् संरब्धो अन्व् अविन्दत् षड् उर्वी[र्] गातुं प्रपश्यन्न् इह राष्ट्रम् आहाः ॥४॥ | ताताभिस् … आह |
| | आ ते राष्ट्रम् इह रोहितो ऽहा[र्] मृधो व्य् अस्थाद् अभयं ते अभूत् । | या … आस्थद् अभवत् • इभूः |
| | तस्मै ते द्यावापृथिवी रेवतीभि× कामं दुहाताम् इह शक्वरीभिः ॥५॥ | |
| | रोहितो द्यावापृथिवी जजान तत्र तन्तुं परमेष्ठी ततान । | … तं • • • |
| | तत्र शिश्रिये अज एकपा[द् अ]दृंहद् [द्यावापृथिवी बलेन ॥६॥ | • समिये … |
| | [रोहितो द्यावापृथिवी अदृंहत् ] तेन स्व[स्] स्तभितं तेन नाकः । | … नाहः |
| | तेनान्तरिक्षं विमिता रजांसि तेन देवा [अ]मृतम् अन्व् अविन्दन् ॥७॥ | • बिमता रक्षांसि … |
| | वि रोहितो [अ]मृशद् विश्वरूपं समाकुर्वाण× प्ररुहो रुहश् च । | … परुहो • • |
| | दिवं रूढ्वा महता महिम्ना सं ते राष्ट्रम् अनक्तु पयसा घृतेन ॥८॥ | |
| | यास् ते [रुह×] प्ररुहो यास् त आरुहो याभिर् आपृणासि दिवम् अन्तरिक्षम् । | यस् • • रुहोर् याम् तान्हो … |
| | तासां ब्रह्मणा पयसा वावृधानो विशि राष्ट्रे जागृहि रोहितस्य ॥९॥ | … वावृधाना विष • जागृह • |
| | यास् ते विशस् तपसस् संबभूवुर् वत्सं गायत्रीम् अनु ता इहागुः । | • • विषस् … गायत्रीमं • • यागुः |
| | तास् त्वा विशन्तु मनसा शिवेन संमाता वत्सो [अ]भ्य् एतु रोहितः ॥१०॥ ॥का°१॥ | … पत रोहिता ॥१॥ |
| शौ १३.१.११-२० | **१८.१६** | |
| | ऊर्ध्वो रोहितो [अ]धि नाके अस्थाद् विश्वा रूपाणि जनयन् युवा कविः । | |
| | तिग्मेनाग्नि[र्] ज्योतिषा वि भाति तृतीये चक्रे रजसि प्रियाणि ॥१॥ | … भासि • चक्रे • • [ सुवीरः |
| | सहस्रशृङ्गो वृषभो जातवेदा घृताहुतिस् सोमपृष्ठस् सुवीरः । | सहस्रशृङ्गो वृषभो जातवेदा घृताहुतिस् सोमपृष्ठम् |
| | मा मा हासीन् नाथितो नेत् त्वा जहानि गोपोषं च मे वीरपोषं च धेहि ॥२॥ | मा म हिसीन् • नेत् त्वा जहाजि … |
| | रोहितो यज्ञस्य जनिता मुखं च रोहिताय वाचा श्रोत्रेण मनसा जुहोमि । | … रोहितया … |
| | रोहितं देवा यन्तु सुमनस्यमाना[स्] स मा रोहैस् सामित्यै रोहयाति ॥३॥ | … सामित्ये • |
| | रोहितो यज्ञं व्य् अदधाद् विश्वकर्मणे तस्मात् तेजांस्य् उप मेमान्य् आगुः । | • • वि दधाद् … |
| | वोचेयं ते नाभिं भुवनस्याधि मज्मनि ॥४॥ | वोचयम् … |
| | आ त्वा रुरोह बृहत्य् उत पङ्क्तिर् आ ककुब् वर्चसा विश्ववेदः । | … मत् • आह् ककुद् • • |
| | आ त्वा रुरोह रोहिताक्षर [आ त्वा रुरोह] रोहितो रेतसा सह ॥५॥ | … रोहिताक्षं … रोहितोहितो • • |
| | अयं वस्ते गर्भं पृथिव्या दिवं वस्ते ऽयम् अन्तरिक्षम् । | |
| | अयं ब्रध्नस्य विष्टपस् स्वर् लोकान् सम् आनशे ॥६॥ | अयं मध्नस्य विष्टपस् • • सम् आनशे |

| | | |
|---|---|---|
| | वाचस् पते पृथिवी नस् स्योना स्योना योनिस् तल्पा नस् सुशेवा । | वाचस्पते पृथिवी न स्योना योनिस्तल्पा सुशेवा |
| | इहेव प्राणस् सख्ये नो [अ]स्तु तं त्वा परमेष्ठि[न्] पर्य् अहं वर्चसा दधामि ॥७॥ | ...अयहं * * |
| | वाचस् पत ऋतवः पञ्च [ये नौ] वैश्वकर्मणा[ः] परि ये [सं]बभूवुः । | ...पर् * * |
| | [इहेव प्राणस् सख्ये नो अस्तु तं त्वा परमेष्ठिन्] परि रोहितो वर्चसा दधातु॥८॥ | ...पर * * * |
| शौ अनव योनिषु प्रजाः | वाचस् पते सौमनसं मनश् च गोष्ठे नो गा रम[य] योनिषु प्रजाम् । | |
| | इहेव प्राणस् सख्ये नो [अ]स्तु तं त्वा परमेष्ठिन् पर्य् अहं वर्चसा दधामि ॥९॥ | ...परमेष्ठि * अयहं * दधातु |
| | परि त्वा धात् सविता देवो [अ]ग्निर् वर्चसा मित्रावरुणाव् अभि त्वा । | |
| | सर्वा [अ]रातीर् अपक्रामन्न् एहीदं राष्ट्रं कृणुहि सूनृतावत् ॥१०॥ ॥का॰२॥ | * * * उदहिदं राष्ट्रं * * ॥२॥ |
| शौ १३.१.२१-२९, ११ | **१८.१७** | |
| शौ प्रष्टिर् वहति | यं त्वा पृषती रथे पृश्निर् वहति रोहित । | ओ॑ यन् * पृशती ... रोहितः |
| | शुभा यासि रिणन्न् अपः । | सभा यास्व रर्णि नमः |
| शौ १९.२४.१[1] | तेनेमं ब्रह्मणस् पते रोहं रोहयोत्तमम् ॥१॥ | ...रुहं * |
| | अनुव्रता रोहिणी रोहितस्य सूरिस् सुवर्णा बृहती सुवर्चाः । | ...सूर्येस् * बृहस्पती * |
| | तया वाजान् विश्वरूपान् जयेम तया विश्वाः पृतना अभि ष्याम ॥२॥ | मया वाजा॑ ॰रूपां * * विश्वार्द * भि स्यम |
| | इदं सद्रो रोहिणी रोहितस्यासौ पन्थाः पृषती येन याति । | ...पपन्थास् पृशती * * |
| | तां गन्धर्वाः कश्यपा उन् नयन्तु तां रक्षन्तु कवयो ऽप्रमादम् ॥३॥ | तंङ् * * तुन् * स्व रक्षन्तु * * |
| | सूर्यस्याश्वा हरयः केतुमन्तस् सदा वहन्त्य् अमृतास् सुखं रथम् । | |
| | घृतपावा रोहितो भ्राजमानो दिवं देवः पृषतीम् आ विवेश ॥४॥ | ...बाजमानो * देवाः पृशतीम् * * |
| | यो रोहितो वृषभस् तिग्मशृङ्गः पर्य् अग्निं परि सूर्यं बभूव । | अयं...अग्निः * * * |
| | यो विष्टभ्नाति पृथिवीं दिवं च तस्माद् देवा अधि सृष्टीस् सृजन्ते ॥५॥ | अयो * पृथिवी ... ति * * |
| | रोहितो दिवम् आरुहन् महतः पर्य् अर्णवा[त्] । | ...आरुहं * * * |
| | सर्वा रुरोह रोहितो रुहः ॥६॥ | ...रुहा |
| | वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुर् अनपस्पृग् एषा । | * मिमीद्य * * देवानां येवानां * * एषाम् |
| | इन्द्रस् सो[मं पिबतु क्षे]मो [अ]स्त्व् अग्निः प्र स्तौतु वि मृधो नुदस्व ॥७॥ | ...अग्नि पृ ष्णात * * * |
| | समिद्धो [अ]ग्निस् समिधानो घृतवृद्धो घृताहुतः । | |
| | अभीषाड् विश्वाषाड् अग्निस् सपत्नान् हन्तु ये मम ॥८॥ | अभीषाडस्मि विश्वशाड् * * हन्त्व् प * |
| | हन्त्व् एनान् प्र दहत्व् अग्निर् यो नः पृतन्यतु । | ...दहन्त्व् * * निः पृतन्यतु |
| | क्रव्यादाग्निना वयं सपत्नान् प्र दहामसि ॥९॥ | क्रव्यादग्निना ... |
| | अग्ने सपत्नम् अधरं पादयास्मद् व्यथया सजातम् उत्पिपानं बृहस्पते । | * * अधरं पारयास्मद् * सुजातम् उतपिदानं * |
| | इन्द्राग्नी मित्रावरुणाव् अधरे पद्यन्ताम् अप्रतिमन्यूयमानाः ॥१०॥ ॥का॰१॥ | इन्द्राग्नी मित्रावरुणा ... अप्रतिमान्यूयमाना ॥१॥ |
| शौ १३.१.३०,३२-४० | **१८.१८** | |
| | अवाचीनान् अव जहीन्द्र वज्रेण बाहुमा[न्] । | |
| | अधा सपत्नान् मामकान् अग्नेस् तेजोभिर् आ दधे ॥१॥ | |
| | उद्यंस् त्वं देव सूर्य सपत्नान् अव [मे] जहि । | उद्यन् तं * * सपत्नान् एव ... |
| | दिवैनान् रश्मिभिर् जहि रात्र्यैनान् तपसा वधीस् ते यन्त्व् अधमं तमः॥२॥ | दिवैनां * जुहि रात्रीणां * * तं हन्त्व् अन्धमन् [तमा |
| | वत्सो विराजो वृषभो मतीनाम् आ रुरोह शुक्रपृष्ठो ऽन्तरिक्षम् । | |
| | घृतेनार्कम् अभ्य् अर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्तु ॥३॥ | |
| | दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं च रोह । | |
| | प्रजां च रोहामृतं च रोह रोहितेन तन्वं सं स्पृशस्व ॥४॥ | |
| | ये देवा राष्ट्रभृतो ऽभितो यन्तु सूर्यस्य । | |
| | तेभिष् टे रोहितस् संविदानो राष्ट्रं दधातु सुमनस्यमानः ॥५॥ | ...संविदाना * * ॰माना |
| शौ वहन्त्व् अध्वगतो हरयः | उ[त्] त्वा यज्ञा ब्रह्मपूता वहन्त्व् अभ्व् अर्कं ? हरयस् त्वा वहन्ति । | |
| | तिरस् समुद्रम् अति रोचसे अर्णवम् ॥६॥ | |
| | रोहिते द्यावापृथिवी अधि श्रिते वसुजिति गोजिति संधनाजिति । | रोहितो...श्रुते । वसुजिद् गोजित् संधनाजिति |
| | सहस्रं यस्य द्रविणानि सप्ततिर् वोचेयं ते नाभि भुवनस्याधि मज्मनि॥७॥ | ...वोचयम् ... |
| | यशा यासि प्रदिशो [अ]नु यशाः पशूनाम् उत चर्षणीनाम् । | * * प्रदिशोदिशो * * * * * |
| | यशाः पृथिव्या [अ]दित्या उपस्थे अहं सवितेव चारुः ॥८॥ | यशः ... |

| | | |
|---|---|---|
| | अमुत्र सन्न् इह वेत्थेतस् संस् तानि पश्यति । | अमित्र * * वेथये सन् नान * |
| | इत× पश्यन्ति रोचनं दिवि सूर्यं विपश्चितम् ॥९॥ | यत: * * दिव * विपश्यन्तम् |
| | देवो देवान् मर्चयस्य् अन्तश् चरत्य् अर्णवे । | * देव... |
| | समानम् अग्निम् इन्धते तं विदु× कवय× परे ॥१०॥ ॥का॰४॥ | * अग्निम् * त्वं ...॥४॥ |
| शौ ११.१.४१-५१ | १८.१९ | |
| पै १६.१७.७ | अव× परेण पर [एनावरेण पदा वत्सं बिभ्रती गौर् उद् अस्थात् । | अव× परेण पर इत्येका |
| | [सा कद्रीची कं स्विद् अर्धं परागात् क स्वित् सूते नहि यूथे अस्मिन्]॥१॥ | |
| | एकपदी द्विपदी सा चतुष्पद्य् अष्टापदी नवपदी बभूवुषी । | |
| | सहस्राक्षरा भुवनस्य पङ्क्तिस् तस्यास् समुद्रा अधि वि क्षरन्ति ॥२॥ | * भुवनस्य पङ्क्तिस् तस्यास्... |
| | आरोहन् द्याम् अमृत× प्राव मे वचः । | ...अमृतत् * व वचा |
| | उ[त्] त्वा यज्ञा ब्रह्मपूता वहन्ति घृतं पिबन्तं हरयस् त्वा वहन्ति ॥३॥ | * * यज्ञ... |
| | वेद [त]त् ते अमर्त्य यत् त [आ]क्रमणं दिवि । | * * * यमति * ते... |
| | यत् ते सधस्थं परमे व्योमन् ॥४॥ | |
| | सूर्यो द्यां सूर्य× पृथिवीं सूर्य आपो अति पश्यति । | ...त * |
| | सूर्यो भूतस्यैकं चक्षुर् आ रुरोह दिवं महीं[म्] ॥५॥ | |
| | उर्वीर् आसन् परिधयो वेदिर् भूमिर् अकल्पत । | * आसं... |
| | तत्रैताव् अग्नी आधत्त हिमं घ्रंसं च रोहितः ॥६॥ | * अहिम् आधन्त * घ्रंसं * रहिता |
| | हिमं घ्रंसं चाधाय यूपान् कृत्वा पर्वतान् । | * घ्नंसं राधाय * कृत्वा पर्वताम् |
| | वर्षाज्याव् अग्नी [ई]जाते रोहितस्य स्वर्विदः ॥७॥ | |
| | स्वर्विदो रोहितस्य ब्रह्मणाग्निस् समाहितः । | स्वर्वदो... |
| | तस्माद् घ्रंसस् तस्माद् धिमस् तस्माद् यज्ञो अजायत ॥८॥ | * घ्रंशम् * बमम् तस्मायज्ञो अजायुत |
| | ब्रह्मणाग्नी संविदानौ ब्रह्मवृद्धौ ब्रह्माहुतौ । | ब्रह्मणाग्निम् संविदानो ब्रह्मवृद्धो ब्रह्माहुतः |
| | ब्रह्मेद्धाव् अग्नी [ई]जाते रोहितस्य स्वर्विदः ॥९॥ | |
| | अप्स्व् अन्यस् समाहितस् सत्ये अन्यस् समाहितः । | ...अग्निम् * |
| | [ब्रह्मेद्धाव् अग्नी ईजाते रोहितस्य स्वर्विदः] ॥१०॥ | |
| | यं वात× परिशुम्भति यम् इन्द्रो ब्रह्मणस् पतिः । | ...इयम् * * * |
| | ब्रह्मेद्धाव् अग्नी [ई]जाते रोहितस्य स्वर्विदः ॥११॥ ॥का॰५॥ ॥अनु॰१॥ | ... ॥५॥ इत्य् अथर्वणिक× वैप्पलादशाखायां [अष्टादशकाण्डे तृतीयो नुवाकः ॥ |
| शौ १३.१.५२-५५,१३.२.१-६ | १८.२० | |
| | वेदिं भूमिं कल्पयित्वा दिवं कृत्वा दक्षिणा[म्] । | |
| | घ्रंसं तद् अग्निं कृत्वा चकार विश्वम् आत्मन्वद् वर्षेणाज्येन रोहितः ॥१॥ | घ्रंशन्... रोहिता |
| | वर्षम् आज्यं घ्रंसो [अ]ग्निर् वेदिर् भूमिर् अकल्पत । | ...घ्रंशो... |
| | तत्रैता[न्] पर्वतान् अग्निर् गीर्भिर् ऊर्ध्वाँ अकल्पयत् ॥२॥ | * सर्वतान्... |
| | गीर्भिर् ऊर्ध्वान् कल्पयित्वा रोहितो भूमिम् अब्रवीत् । | |
| | तद् इदं सर्वं जायतां यद् भूतं यच् च भव्यम् ॥३॥ | * यदं * * यद् * * च भव्यम् |
| | स यज्ञ× प्रथमो भूतो भव्यो अजायत । | |
| | तस्माद् ध जज्ञ इदं सर्वं यत् किं चेदं विरोचते रोहितेन ऋषिणाभृतम् ॥४॥ | तस्मा ध्व जयवेदं ...विरोहिते * रिषणाभृतम् |
| | उद् अस्य केतवो दिवि शुक्रा भ्राजन्त ईरते । | |
| | आदित्यस्य नृचक्षसो महिव्रतस्य मीढुषः ॥५॥ | ...मही॰ मीढुषा |
| | दिशां प्रज्ञानं स्वरयन्तो अर्चिषा सुपक्षम् आशुं पतयन्तम् अर्णवे । | यशां * स्वरयन्तो * स्वपक्षम् आसं * * |
| शौ प्रज्ञानां स्वरयन्तम् (कौशिक [ प्रज्ञानं अपि) | स्तवाम सूर्यं भुवनस्य गोपां यो रश्मिभिर् दिश आभाति सर्वाः ॥६॥ | ...दिशाभाति सर्वा |
| | यत् प्राङ् प्रत्यङ् स्वधया यासि शीभं नानारूपे अहनी कर्षि मा[य]या । | * * * * यादि शीभिन् * * कर्व * |
| | तद् आदित्य महि तत् ते महि श्रवो यद् एको विश्वं परि भूम जायसे ॥७॥ | * * मे * त मवी स्रवो द को विद्वां * भूमि* |
| | विपश्चितं तरणिं भ्राजमानं वहन्ति यं हरितस् सप्त बह्वीः । | |
| | स्रुताद् यम् अत्रिर् दिवम् उन्निनाय तं त्वा पश्येम परियान्तम् आजिम् ॥८॥ | * दिवम् अत्रि * अन्यनाय * * * पर्यन्तिम् * |
| | मा त्वा दभन् परियान्तम् आजिं स्वस्ति दुर्गाम् अति याहि शीभम् । | ...दभं पर्यन्तम आजीं ... शीभाम् |
| | दिवं च सूर्य पृथिवीं च देवी[म्] अहोरात्रे विमिमानो यद् एषि ॥९॥ | * * सूर्य पृथिव्यं... |

स्वस्ति ते सूर्य चरतो रथस्य येनोभाव् अन्तौ परियासि सद्यः ।
यं ते वहन्ति हरितो वहिष्ठास् तम् आ रोह सुखम् आ स्वस्त्यम् ॥१०॥
॥का° १॥

## १८.२१

शौ १३.२.७-१५
सुखं सूर्य रथम् अंशुमन्तं स्योनं सुवह्निम् अधि तिष्ठ वाजिनम् ।
यं ते वहन्ति हरितो वहिष्ठाश् शतम् अश्वा यदि वा सप्त बह्वीः ॥१॥
सप्त सूर्यो हरितो यातवे रथे हिरण्यत्वचसो बृहतीर् अयुक्त ।
अमोचि शुक्रो रजसः परस्ताद् विधूय देवस् तमो दिवम् आरुहत् ॥२॥
उत् केतुना बृहता देव आगन्न् अपावृक् तमो अभि ज्योतिर् अश्रैत् ।
शौ स वीरो
दिव्यस् सुपर्णस् स्थविरो ? व्य् अख्यद् अदित्याः पुत्रं नाथकामो ऽभि
यामि भीतः ॥३॥
उद्यन् रश्मीन् आ तनुषे प्रजास् सर्वा वि पश्यसि ।
उभा समुद्रौ क्रतुना वि भासि सर्वांल् लोकान् परिभूर् भ्राजमानः ॥४॥
[पूर्वापरं चरतो माययैतौ] शिशू क्रीडन्तौ परि यातो अध्वरम् ।
विश्वान्य् अन्यो भुवना [विचष्टे अन्यं] हैरण्यैर् हरितो वहन्ति ॥५॥
दिवि त्वात्त्रिर् अधारयत् सूर्या मासाय कर्तवे ।
स एक[स्] सुधृतस् तपन् सर्वा भूतावचाकशत् ॥६॥
उभाव् अन्तौ सम् अर्षति वत्सस् संमातरम् इव ।
नन्व् एतद् इतः पुरा ब्रह्म देवा अमी विदुः ॥७॥
यत् समुद्रम् अधि श्रितं तत् सिषासति सूर्यः ।
अध्वास्य विततो महान् पूर्वश् चापरश् च यः ॥८॥
तं सम् आप्नोति जूतिभिस् तस्मान् नाप चिकित्सति ।
तेनामृतस्य भक्षणं देवानां नाव रुध्यते ॥९॥ ॥का° २॥

## १८.२२

शौ १३.२.१६
उद् उ त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥१॥
शौ १७
अप त्ये तायवो यथा नक्षत्रा यन्त्य् अक्तुभिः ।
सूराय विश्वचक्षसे ॥२॥
शौ १८
अदृश्रन्न् अस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥३॥
शौ १९
तरणिर् विश्वदर्शतो ज्योतिष्कृद् असि सूर्य ।
विश्वम् आ भासि रोचन ॥४॥

...रथासि * अन्तौ पर्यासि *
...स्वस्त्यम् ॥१॥

[ तिष्ठ वाजिनम्
सुखं सूर्यं रथम् अंशुमन्तं स्योनो स्ववह्निम् अधि
{ ... हरितो वहिष्ठस् शतम् अश्वा यदि वा * बह्वीः
सप्त सूरो हरिष्ठाश् शतम् अश्वा यदि वसु सप्त
बह्वीः [शुक्रः
सप्त सूरो हरितो * रथो हिरण्यत्वचसो बृहतीर्
अमोति सक्रो रजसि× परस्ताद् वधूय ...
{ उत केतुना बृहता * आगन्न अपावृकन् दुमं
विभ * अश्रयेः
* * * व्यख्यन्न् आदित्या× * नाथगाम भं
याम तीता
उद्य रश्मिम् * तनुषे प्रजास् * * पश्यति
शिशू× कुन्दंना पर्यातो अध्वरम्
...हिरण्यो हरितौ वहन्ति
* त्वा त धारयत् * मासाय कर्तव्ये
* एक * * स्वद् भूतविचाकशत्
* अन्तौ * आर्षति * सम्मातरम् *
* एति कर्तव× * * देव्या अमी विदुः
...श्रितं * सिष्यसुत सूर्य
मध्वश्च ... चापरश् च यः
तं सम् आप्नोव्यो जुतिभिस् तस्मात् नाप
तेनामृतस्य ... [ जिगित्सति
...नक्षत्रा यन्त्व् उक्तुभिः
अदृश्रन्न्...
* * भासि रोचना

| | | |
|---|---|---|
| शौ २० | प्रत्यङ् देवानां विशः प्रत्यङ्ङ् उद् एषि मानुषी[ः] । | प्रत्यंन्... प्रत्यं उद् * * |
| | प्रत्यङ् विश्वं स्वर् दृशे ॥५॥ | प्रत्यं * स्वर् * |
| शौ २१ | येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । | ...भुरण्यन्तं * * |
| | त्वं वरुण पश्यसि ॥६॥ | |
| शौ २२ | वि द्याम् एषि रजस् पृथ्व् अहा मिमानो अक्तुभिः । | |
| | पश्यन् जन्मानि सूर्य ॥७॥ | |
| शौ २३ | सप्त त्वा हरितो रथे वहन्ति देव सूर्य । | सप्त... सूर्य । सप्त... सूर्य ( द्विर्वचनम् ) |
| | शोचिष्केशं विचक्षण ॥८॥ | |
| शौ २४ | अयुक्त सप्त शुन्ध्युवस् सूरो रथस्य नप्त्यः । | * सप्त... रथस्य नप्त्यः |
| | ताभिर् याति स्वयुक्तिभिः ॥९॥ | |
| शौ १०.४८.१ | अभि मा वर्चसा ? गिरस् सिञ्चन्तीर् आचरण्यवः ? । | * सा... आचरण्यतः |
| | अभि वत्सं न धेनवः ॥१०॥ | * वत्सं... |
| शौ २ | ता अर्षन्तु शुभ्रिय× पृञ्चन्ती[र्] वर्चसा प्रियः । | * अर्षन्तु... वर्चसा प्रियः |
| | जात जात्रीर् यथा हृदा ॥११॥ ॥का° १॥ | जात जातीर् यथा हृदा ॥१॥ |

१८.२३

| | | |
|---|---|---|
| शौ १०.४८.३ | यन्मपयसाच्चीय×? कीर्तिं श्रयमाणम्? आ वहान् । | * कीर्त्यं... वहाम् |
| | मह्यम् आयुर् घृतं पयः ॥१॥ | * आद घृतं प्रिवः |
| शौ १३.२.२५ | रोहितो [दिवम् आरुहत् तपसा तपस्वी । | |
| | [स यो]निम् एति स उ जायते पुनस् स देवानाम् अधिपतिर् बभूव ॥२॥ | निगाधितस्वो जायते नमस् स देवानाम् अधि° * |
| शौ २६ | यो विश्वचर्षणिर् उत विश्वतोमुखो विश्वतोबाहुर् उत विश्वतस्पात् । | ...विश्वतोबाहुर्... |
| | सं बाहुभ्यां धमति सं पतत्रैर् द्यावाभूमी जनयन् देव एकः ॥३॥ | ...पतत्रैर् द्यावाभूमी... |
| शौ २७ | एक द्विपदो भूयो वि चक्रमे [द्विपात् त्रिपादम् अभ्य् एति पश्चात् । | |
| | [द्विपाद् ध षट्पदो भूयो वि चक्रमे] त एकपदस् तन्वं सम् आसते ॥४॥ | ...तन्वं * * |
| शौ २८ | अतन्द्रो यास्यन् हरितो यद् आस्थाद् दिवि रूपं कृणुते रोचमानः । | ...कृणुते * |
| | केतुमान् उद्यन् सहमानो रजांसि विश्वा आदित्य प्रवतो वि भासि ॥५॥ | केतुमां रुम्यं * * विश्वादित्य× * * भावसि |
| शौ २९ | बण् महाँ असि सूर्य बड् आदित्य महाँ असि । | |
| | महांस् ते महतो महिमा त्वम् आदित्य महाँ असि ॥६॥ | महस् * * महीमाम्... |
| शौ ३० | रोचसे दिवि रोचसे [अन्तरिक्षे पतङ्ग पृथिव्यां] रोचसे रोचस [अ]प्स्व् अन्तः । | |
| | उभा समुद्रौ रुच्या व्य् आपिथ देवो देवासि महिष[स्] स्वर्जित् ॥७॥ | * समुद्रो रुचा * आपित... |
| शौ ३१ | अर्वाङ् परस्तात् प्रयतो ? व्यध्व आशुर् विपश्चित् पतयन् पतङ्गः । | अर्वाक् * वचो विद्धाशुर् * * * |
| | विष्णुर् विचित्तश् शवसाधितिष्ठन् प्र केतुना सहते विश्वम् एजत् ॥८॥ | * * शवमेसाधितिष्ठं... |
| शौ ३२ | तिग्मो विभ्राजन् तन्वं शिशानो ऽरंगमास× प्रवतो रराणः । | * पिभ्राजं तन्वश् * रङ्गमासुन् प्रवतो रराणाः |
| | ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा आस्थात् प्रदिश× कल्पमानः ॥९॥ | * पक्षी... स्था× प्रदिश× * |
| शौ ३३ | चित्रश् चिकित्वान् महिषस् सुपर्ण आरोचयन् रोदसी अन्तरिक्षम् । | ...सुपर्णारोचयन् रोदसीम् अन्तरिक्षम् |
| | अहोरात्रे परि सूर्यं वसाने प्रास्य विश्वा तिरतो वीर्याणि ॥१०॥ ॥का° ४॥ | °रात्री * * वसान प्रास्य विश्वास् * * ॥४॥ |

## १८.२४

| | | |
|---|---|---|
| शौ १३.२.३४ | चित्रं देवानां केतुर् अनीकं ज्योतिष्मान् प्रदिशस् सूर्य उद्यन् । | चित्रन् देवानाम्...उद्यम् |
| | दिवाकरो ऽति द्युम्नैस् तमांसि विश्वातारीद् दुरितानि शुक्रः ॥१॥ | * दु * * विश्वातार्य * शुक्रा |
| शौ ३५ | चित्रं देवानाम् उद् अगाद् अनीकं चक्षुर् मित्रस्य वरुणस्याग्नेः । | |
| | आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस् तस्थुषश् च ॥२॥ | |
| शौ ३६ | उच्चा पत[न्त]म् अरुणं सुपर्णं मध्ये दिवस् तरणिं भ्रा[जमा]नम् । | |
| | पश्येम त्वा सवितारं यम् आहुर् अजस्रं ज्योतिर् यद् अविन्दद् अत्रिः ॥३॥ | ...दर्वंद् अत्रि |
| शौ ३७ | दिवस् पृष्ठे धावमानं सुपर्णम् अदित्याः पुत्रं नाथकामो ऽभि यामि भीतः । | ...नादित्याः * नाथगाम भयाम भीता |
| | स नस् सूर्य प्र तिर दीर्घम् आयुर् मा रिषाम सुमतौ ते स्याम ॥४॥ | * ना सूर्यः * तद्... |
| शौ नास्ति | अहोरात्राणि विदधत् कृण्वानः पार्थिवं रजः । | * विदधाथि * पार्थिवी * |
| | नवं-नवं सखीभवन् कृणुषे देव सूर्य ॥५॥ | *°भवं * दवे * |
| शौ ३८ | सहस्राह्ण्यं वियताव् अस्य पक्षौ हरेर् हंसस्य पततस् स्वर्गम् । | सहस्राहं योतावस्य * * * र्हरितम् * |
| शौ उरस्युपदध | स विश्वान् देवान् ‹ तिनस् समथुस् ? संपश्यन् याति भुवनानि विश्वा ॥६॥ | ...संपशन्... |
| शौ ३९ | रोहितः कालो ऽभवद् रोहितो ऽग्रे प्रजापतिः । | रोहितो कोको भवभ्... |
| | रोहितो यज्ञानां मुखं रोहितो ज्योतिर् उच्यते ॥७॥ | ...उच्यसे |
| शौ ४० | रोहितो भूतो ऽभवद् [रोहितो ऽत्य् अतपद् दिवम्] । | |
| | रोहितो रश्मिभिर् भूमिं समुद्रम् अनु सं चर[त्] ॥८॥ | * * भूम्यं... |
| शौ ४१ | सर्वा दिशस् सं चरति रोहितो अधिपतिर् दिवः । | |
| | दिवं समुद्रम् आद् भूमिं सर्वाल् लोकान् वि रक्षति ॥९॥ ॥का°५॥ | * * * भूम्यं .. रक्षति ॥५॥ |

## १८.२५

| | | |
|---|---|---|
| संहितासु कापि नास्ति | वितंसयन्तं ? प्रति मुञ्चते रजो मुहुर्ते रश्मीन् अंशं बृहन्तम् । | वितन्वस्तं * * सज मुहूर्ते... |
| | दिवाचरः पश्यति यत् परात् परं ‹ पराक्षा प्रबुध्यमणाद् विश्वम् आप्राद् हिरण्मयं हरितः केतुर् उद्यन् ॥१॥ | ...अमा हिरण्मवं * * उद्यम् |
| शौ १३.२.४२ | आरोहन् शुक्रो बृहतीर् अतन्द्रो ? अमर्त्यः कृणुते वीर्याणि । | आरोहा शक्रो...अमर्त्याः * * |
| | दिव्यस् सुपर्णो महिषो वातरंहा य[स्] सर्वाल् लोकाँ अभि यद् विभाति ॥२॥ | ... महिषं .. येद् * |
| शौ ४३ | अन्यद् अन्यद् एति सद्यो ऽयं वत्सावम् ? अहोरात्राभ्यां महिषः कल्पमानः । | ... महिषात् * |
| | सूर्यं वयं रजसि क्षियन्तं गातुविदं हवामहे नाधमानाः ॥३॥ | * वर्यं * क्षियन्ते...नाथमामा |
| शौ ४४ | पृथिवीप्रो महिषो नाधमानस्य गातुर् अदब्धचक्षुः परि सर्वं बभूव । | पिथिविप्रो * वाथमानासु * अद्भुतचक्षु·... |
| | विश्वं संपश्यन् सुविदत्रो यजत्रश् शिवाया नस् तन्वा[श] शर्म यच्छात् ॥४॥ | ... यजत्रि ... |
| शौ ४५[१-२] | पर्य् अस्य महिमा पृथिवीं समुद्रं ज्योतिषा विभ्राजन् परि द्याम् अन्तरिक्षम् । | ...पृथिव्यां ... पव * * |
| | अहोरात्राभ्यां सह संवसाना उषा नीयुः प्रतराद् आविहम् ॥५॥ | ... अविहम् [वतीम् * |
| शौ ४६ | अबोध्य् अग्निस् समिधा जनानां प्रति धेनुम् इवायतीम् उषासम् । | अंबोध्यग्निम् समिधा जनानां प्रति धेनुमिवा- |
| | यह्वा इव प्र वयाम् उज्जिहानाः प्र भानवस् सिस्रते नाकम् अच्छ ॥६॥ | ...सस्रुजे नाकम् अत्स्व |
| ऋ ५.२.१ | कुमारं माता युवतिर् समुब्धं गुहा बिभर्ति न ददाति पित्रे । | ...ददाति * * * |
| | अनीकम् अस्य न मिनज् जनासः पुरः पश्यन्ति निहितम् अरतौ ॥७॥ | अनेकम्... |
| ऋ २ कमेतं त्वं युवते | तम् एतं त्वं युवतिः कुमारं पेषी बिभर्षि महिषी जजान । | * * त्व... |
| | पूर्वीर् हि गर्भश् शरदो ववर्धापश्यं जातं यद् असूत माता ॥८॥ | पूर्वान् हि... |
| संहितासु कापि नास्ति | यस्य तिस्रो व नु म ए क धा त्म तो ? ऽस्मै बलिं देवजना हरन्ति । | |
| | यस्यासौ द्यौः पृथिव्य् अन्तरिक्षं गुहां प्र तिष्ठन्ति मधुनासक्ता[ः] ॥९॥ | ...तिष्ठति * |
| संहितासु कापि नास्ति | नव दिवो देवजनेन गुप्ता नवान्तरिक्षाणि नव भूमय इमाः । | ...भूमवेमा |
| वैतानसूत्रे ३१.१२[२] | यस्मिन्न् इदं सर्वम् ओतं प्रोतं यस्माद् अन्यन् न परं किं चनास्ति ॥१०॥ ॥का° ६॥ | * * * ओत ... ॥६॥ |

## १८. २६

| | | |
|---|---|---|
| कापि न दृश्यते | न तस्मात् पूर्वं न परं त्वद् अस्ति न भूतं नोत भव्यं यद् आसीत् । | ...नीर * * * |
| | सहस्रपाद् एकमूर्धा व्यात्मा स एवेदम् आ वरीवर्ति भूतम् ॥१॥ | ...एवेकम् न वरिवर्ति भूतिम् |